जयगुरु

# भगवान् बादरायणः



रचना संकलनं च—

...रायणरथः

...काशकः

...चारसमितिः, पुरी

जयगुरु

# भगवान् बादरायणः

रचना संकलनं च —

श्रीनारायणरथः

डि. ए. जि. अफिस, पुरी

ता २। ९। ८८

मूल्य रु ८-००

# निवेदनम्

"यस्यस्मरणमात्रेण यज्ञदानतपः क्रियाः
न्यूनाः संपूर्णतां यान्ति सद्योवन्देतमच्यूतम्"

असावधानतया मुद्रणदोषवाहुल्यं क्वचित् पाठदोषा अपि वर्त्तन्तेऽत्र। शुद्धिपत्रे मुख्यमुद्रणदोषाः केवलं दर्शिताः। अन्यदनुस्वारविसर्गपूर्णच्छेद वर्णविन्यासाः विज्ञैः कृपया स्ववुध्यागत्या संशोधनीयाः। सर्वं संशोधितं चेत् पुस्तकं चिन्त्रितं स्यात्। शुद्धमुद्रणेऽपि उत्कलीयविदुषामनाग्रहमालोक्य इदानीमशुद्धेऽपि उदासीनोऽहं संजातः उभयत्र तुल्यफलं विचिन्त्य। तर्हिकथमित्थमर्थव्यय इतिपृष्टश्चेत् श्रमसार्थकतायै एवेति वाच्यम्। ग्रन्थोऽयं श्रीश्रीगुरवेऽर्पितः स्यादित्यलम्।

पुरी
ता २. ६. ८८

लेखकः
श्रीनारायणरथः

# भगवान् बादरायणः

यस्यश्रीपादपद्मप्रणतिरपि सकृन् मोहसंघातशान्त्यै
मूर्त्तिश्चारुः प्रशान्ता क्षणमपि कलिता चेतसीष्टस्य सिद्ध्यै
मन्दप्रारब्धपाकान् मुहुरपिमननात् दुष्टचिन्ताकुलोऽहं
शिष्टाध्वानं नचास्ते यदितिखलु गुरोस्तच्चमन्ये प्रसादः।

प्रस्तावः—

सद्गुरोराश्रयं प्राप्यापि मुक्तिपाथात् पराङ्मुखोऽयं जनः श्रीनारायणरथशर्मा अक्षराणां सज्जाकर्मणि चिराय सक्तश्चेत् तदिच्छामयस्य इच्छयैव। आत्महिताय किमपि कार्यमकृत्वा तदर्थं पदयोजनया अतिपुरुषाणां गुणानुवादे दत्तावधानेन तेन भगवतः श्रीकृष्णद्वैपायनस्य जगद्गुरोः जीवनगाथां विभिन्नग्रन्थादुद्धृत्य पठनाभिनयार्थं समाहारेण किंचित् चित्रितात्र।

"आकरे पद्मरागाणां जन्म काचमणेः कुतः" इति वचनं साधु वशिष्ठवंशेषु। परन्तु तेष्वपि प्रसिद्धतमः पराशरस्य पुत्रो व्यासः यः नारायणीयगुरुपरंपरायां षष्ठस्थानमलंकरोति स्म।

पराशरस्य पुत्रत्वमाप्नुय स एव बादरायणः अत्र भारतवर्षे जन्मादिलीलां कृत्वा तिरोहितः इति तत्कृतिभिः प्रमाणितं धूमादग्निरिव। पौराणिकमपि तदाख्यानं एकदा न वास्तवमासीत् अन्यथा कथं ब्रह्मसूत्रमहाभारतादीनामुत्पत्तिः

एवं नोचेत् आसहस्रवर्षात् कथं व्यासपूर्णिमायाः पालनं तज्जयन्तीमुपलक्ष्य कथं वा व्यासगुम्हा व्योमसरोवर इत्यादि नामकरणं च ? तस्मात् तस्यैव महापुरुषस्य जन्मजीवनादि-घटनावलीनां अभिनयेन प्रत्यक्षप्रदर्शनविषये लेखकस्य श्रीनारायणरथशर्मणः अभिनवोऽयं यत्नः सर्वेषां मङ्गलाय भवेदित्यलम् ।

—*—

# प्रथमांकः

## प्रथमदृश्यम्

(होमरतः पराशरः निभृतं राक्षसानां वधाय आहुतिं ददाति अग्नौ । अत्रिपुलहपुलस्त्यादीनामागमनं रक्षसां रक्षणाय)

अत्रिः— पितुर्वधं विलम्बेन ज्ञात्वापि महता क्रोधेन वृद्धबाल-निर्विशेषेण रक्षसां नाशं करोति वशिष्ठस्य तेजस्वी पौत्रोऽयम् । निर्दोषप्राणिनः कथं नाशमर्हन्ति वा ?

पुलहः— यामस्तं शान्तं करिष्यामः ।

पुलस्त्यः- वत्स पराशर ! अपविघ्नमाचरसि कच्चित् यज्ञमिदम् ? तव पितुर्वधं अजानतामेतेषां निरपराधानां राक्षसानां विनाशेन कच्चित् मुदः भवन्ति तेऽपि ? तात ! मत्प्रजा-नामेवमुच्छेदं कर्त्तुं नार्हसि त्वं । नहि एष तपस्विनां धर्मो

वा । तस्मात् शममाचर । ब्राह्मणेषु वरिष्ठोऽपि एवं पापकर्मणि रुचिस्ते कथं संजाता ? पिता ते धर्मज्ञ आसीत् । इत्थमधर्मकर्मणा मत्प्रजाक्षयेन तमतिक्रान्तुं नार्हसि त्वं । शक्तेः शापादेवकल्माषपादस्य नरभक्षि राक्षसत्वं येन वाशिष्ठानां मृत्युरभूत् । ते पूर्वजानां मृतौ प्रारब्धमेव प्रधानं विश्वामित्रः कल्माषपादश्च निमित्तभूतो एव । तेऽप्यधुना स्वर्गे मोदन्ते । शक्तिनंदन ! भद्रं ते भूयात् । अस्य राक्षसवधसत्रस्य समाप्तिः स्यात् मद्वचनात् एव ।

पराशरः-(आसनादुत्थाय प्रणतः) यथाज्ञा भवताम् । समापयामि सत्रमिमम् । यज्ञार्थं संचिताग्निं हिमवत्पार्श्वे उत्सृजामि पश्यतामेव भवताम् । तत्र तु तदग्निः पर्वणि पर्वणि रक्षोवृक्षाश्मानि भक्षयिष्यति किंचित् एवं ।

(ऋषीणां प्रस्थानमाशिषानन्तरम् । पराशरस्य तपस्यार्थंतीर्थयात्रा)

—*—

## द्वितीयदृश्यम्

(मत्स्यगन्धा यमुनायां नावं वाहयति । तीर्थयात्रायां भ्रमतः पराशरस्य तत्र प्रवेशः)

पराशरः- अहो शुभक्षणमागतं पृथिव्याः । महापुरुषस्य सम्भवं सूचयति साम्प्रतिकी ग्रहस्थितिः । तत्सम्भवः मत्तः स्यात्

चेत् का हानिः ? जनकत्वं मयि स धु भवेद्वा परन्तु क्वास्ते जननी ? कथं वा सदृशीभार्य्याप्तिर्मे तपस्विनः तीर्थयात्रिणः गङ्गातटे वा तावित्, शुभलग्नमतीतं भवेदेव ।
(नावागमनं सन्निधि सत्यवत्याः कैवर्त्तकन्यायाः)

सत्यवती- महर्षे ! ऽपि यमुनां तितीर्षुः ? नावमायाहि, अपरपारं यामि यात्रिणः आनेतुम् । वयं शुल्कं न गृह्णामः धर्मार्थमेतदेव ।

पराशर:- (स्वं) केयं किशोरी चारुभाषिणी ? प्रथमयौवनेऽपि अतीवरूपसम्पन्ना दृश्यते । दर्शनमात्रेण मनोहरति मे । नेयं कैवर्त्तकन्या भवितुमर्हति (नेत्रंनिमील्य) अहो वासवीयं कन्यका, उपरिरेवसोः वीर्येण मत्स्यरूपिण्याः शापग्रस्ताद्रिकाप्सरसः गर्भादुत्पन्ना । दैवेन प्रेरितेयं वा मत्संकल्पितार्थसिद्धये । मदिच्छा कथयिष्यामि नौकायाम् ।

(आनन्देन नौकामारोहति सत्यवत्याःहस्तवलम्बनात्)

सत्यवती- (स्व) अहो अकस्मात् पाणिर्मे गृहीतोऽनेन । पाणिस्पर्शादपि सुखं जायते मे चेतसि पुलकश्च वपुषि । (प्रकाशं) महात्मन् । कथंमाकाशं मुहुः पश्यसि परिणतेऽपि पूर्वाह्णे प्रखरमार्त्तण्डे मध्याकाशमास्थितेऽपि ?

पराशरः- कल्याणि ! ज्योतिर्विज्ञानमधीतं मया । दिवसेऽपि

णात्। शुभलग्नमिदं समाप्तिं याति यत्र जगत्यां भगवतः कस्यचित अंशावतारस्य सम्भवो भविष्यति। महापुरुषस्य जनकत्वाय मे मतिर्भवति। परन्तु अहं ब्रह्मचारी तपस्वी संप्रति तीर्थयात्री च। त्वद् ऋते नारी नाम न कापि वर्त्तते चात्र मत्सन्निधौ। स्वीकरोषि किं मद् समागमं सद्यः ? किं नाम ते कस्य पुत्री वा। ऋषेर्वशिष्ठस्य नप्ताहम्।

सत्यवती- (विस्मिता लज्जिता च) दाशराजस्य कन्यकाहं नाम्ना सत्यवती। कथमेव मयुक्तं भाषसे ? अप्राप्तयौवना कन्या पितृवश्याहमिदानीं। ब्राह्मण ! तुल्यगुणयोः संयोगे सुखं स्यात्। आवयोः कुलशीलगुणरूपेसु कथं वा समानता? नीचकुलोद्भवा निषाद कन्याहं। भवांस्तु सदाचारी तपस्वी ब्राह्मणः। मत्स्यगन्धायां मयि कथमेवं कुत्सिता बुद्धिस्ते ? पुनश्च समागमात् कन्याभावे दूषिते कथं मे गृहप्रत्यावर्त्तनम्। एवं सति जीवितुमपि न कांक्षेऽहं। यमुनायां नावं वाहयामि संप्रति। तटदेशे उटजे पितरः भोजनं कुर्वाणाः ऋषयोऽपि वर्त्तन्ते। अपरेऽपि जनाः पश्यन्ति तीरयोः। तैरालोकितयो रावयोः कथं वा संगमः स्यात्।

पराशरः- अयि भीरु ! मत्प्रसादो वृथा न जातो कदाचिदपि। मत्प्रियं कृत्वा त्वं कन्यैव स्थास्यसि। सपदि कुहेलिकां सृजामि सर्वतोऽत्र येन एते जनाः द्रष्टुं न शक्नुवन्त्यावाम्।

पश्य ! द्वीपोऽप्युत्तिष्ठति यमुनायाः गर्भात् अस्मत्प्राश्रयार्थम् का वाधा भूयोः नौ समागमे ? शुचिस्मिते ! वरानपरानपि वृणीष्व यत् ते मनसि वर्त्तते ।

सत्यवती- (नीहारं द्वीपं चालोक्य विस्मिता) कैवर्त्तकन्याहम् । निरन्तरं मत्स्यसंग्रहेन मत्स्यगन्धो निर्गच्छति गात्रान् मे, गात्रसोगन्ध्यं नवयौवनं च काङ्क्षितं मे चिराय ।

पराशरः- (प्रसन्नः) मत्स्यगन्धे ! इत्येव केवलं कामयसे । महत्जलप्रपातस्य पुरः कलसं प्रसारयसि । अस्त्वेवं तावत् अद्य प्रभृति शरीरात् ते कस्तुरिगन्धः निर्गमिष्यति यत्सुरभिः योजनादपि जनान् आकर्षयिष्यति । तस्मात् काले कस्तुरीगन्धा योजनगन्धा गन्धवती इत्याहूता भवसि लोकैः, वालिके । स्त्रीस्वभावगुणास्त्वाम्नायान्तु सपदि । अस्या नौकयामेव रंस्यावः ।

सत्यवती- न त्वेवं त्वरया । विचार्य कर्म क्रियेत । निषादपुत्र्यां मयि वशिष्ठकुलोद्भवस्य ते कथं समागमः स्यात् ? मामवलां त्वं तेजसा धर्षयसीव । कार्यसिद्धेरनन्तरं पलायिते त्वयि किमहं करिष्यामि ? कथं मुखं वा दर्शयिष्यामि लोकेषु अमोघवीर्यस्य तव तेजो गर्भे धारयन्ती । नक्तमेव प्रशस्तमिदं पाशवकर्म दिवसे निषिद्धमिव ।

पराशरः– मत्स्योदरी ! वृथावलिप्तासि । न जाने दुर्गन्धायां त्वयि अप्राप्तयौवनायामपि कथं मे सद्यो व्यामोहः। विचारैरपि वोधं न समायाति । ईश्वरेच्छा एव वलीयसी। पूर्वमप्सरस्स्वपि तपोविघ्नमाचरितुमागतासु न ममासक्तिरभूत् । अन्यासु ललनासु च न चासक्तिरासीन् मे कदाचित् । परन्तु धीवरकन्यायास्ते परतन्त्रोऽहमिदानीम् नूनमदृष्टप्रभावादेव ।

सत्यवती- (स्व) ब्राह्मणोऽयं पण्डितमूर्खः प्रतिभाति । हिताहितं न जानाति । तथापि अस्य वद्धशरीरस्य दिव्यतेजसा मनो मे द्रवितमिव । मनोभवस्य प्रावल्यमपि अनुभवामि चेतसि । भवतु तावत् यच्चिन्तितमीश्वरेण । नास्यानुरोधं हातुं शक्नोमि । (प्रकाशं) अवलाहं किं वा करिष्यामि ते नौकायां अत्र को वा सहायो मे सर्वं विचार्य यथा हितं समाचरतु भवान् । (पराशरः पाणिं प्रसारयति व्याकुलतया)

—*—

## तृतीयदृश्यम्

(शौचशुद्धः पराशरः यमुनाद्वीपे उपविष्टः प्रसन्नतया)

पराशरः– गन्धवति ! अपि प्रसादितासि ? न कोऽपि ज्ञास्यति पितृकुलेषु ते गर्भधारणम् । यथाकालं प्रच्छन्नप्रसवा

भविष्यसि ! महापुरुषस्य सम्भवः स्यादेव यमुनायाः द्वीपे । भगवतः विष्णोः अंशत्वात् जातमात्रेण बालक इव वर्द्धितावयवो भविष्यत्यसौ । सर्वे वेदाश्च एनं प्राप्स्यन्ति विनापि अध्ययनदानव्रततपोभिः । तस्य कीर्त्तिरपि त्रीलोकेषु प्रसिद्धिं यास्यति । महत्कल्याणं साधितं स्यात् भिः अनेन जगतः । तत्रागमिष्यन् तदानीं नेष्यामि तं मदाश्रमं योगादिशिक्षासंस्कारार्थम् । अनन्तरं त्वं सुस्था सती गृहं याहि निर्भयेन । साम्प्रतं गच्छामि स्वकार्यार्थं । कल्याणं भूयात् ते ।

(पराशरस्य प्रस्थानं । सत्यवत्याश्च गृहप्रत्यावर्तनं)

—※—

## चतुर्थदृश्यम्

दाशराजः- कस्तुरीगन्ध आयति दूरात् । इयं मत्स्यगन्धा कस्तुरीं संगृह्य आगच्छति वा । सत्यवति । कस्तुरी आनीता किं यतः सुरभिः ।

सत्यवती- न तथा ।

दाशः- तर्हि कथमेव सुरभिः ।

सत्यवती- मत् शरीरादेवायंगन्धः पितः ।

दाशः- (विन्मतः) परन्तु मत्स्यगन्धं दूरीकृत्य कथं केन वा दिव्यगन्धः प्रदत्तः । स्थिति वा ते गात्रं कस्मात् ?

सत्तवती- (कम्पितापि साहसं कृत्वा) पितः ! महाप्राज्ञेन शक्ति-पुत्रेण पराशरेण ऋषिणा विचित्रकर्मणा दयया मत्स्यगन्धं निरस्य कस्तुरीगन्धो विहितो मे ।

जनाः- आः ! ऋषेः प्रसादोऽयं । ऋषेः प्रसादोऽयं भवितुमर्हति। नोचेत् वयं सुरभिणा योजनादपि मोहिताः कथं स्यामः महाशक्तिमानेवासौ महर्षिः यमुनायाः मत्स्यसंख्यां नभसिच नक्षत्रसंख्यामपि वक्तुं शक्नोति । दिष्टया तत् प्रसादो लब्धः सत्यवत्या यदर्थं राजानोऽपि यत्नशीलाः । (प्रस्थानं तेषाम्)

दाशः- (स्वं) किमेते जना उपहसन्ति मां ? किमपि अघटनं संघटितं वा ? का सेवा कृतानया यतः ऋषेः प्रसादः' इयं तु कन्या एव । अनभिमतं किमपि न सम्भवति । ऋषयः परोपकारिणः । अहेतुकी एव तेषां करुणा अकारणं हितं कुर्वन्ति जगतः । किं पुनः तेषां सेवया न स्यात् । नदी तारणस्य फलमेतद् वा भवेत् । "परगुणपरमाणुं पर्वती-करिष्णवः साधवः" । कथं वा तेऽनुगृहीताः स्युः । प्रत्युपकार एवैतत् ।

दाशपत्नी- सत्यवति ! गृहे एव स्थित्वा गृहकर्माणि कुरु इतः परम् । गात्रसौगन्धं जनानाकर्षयिष्यति । तन्न मङ्गलाय । नद्याः पारं न गन्तव्यं निभृतं त्वया पर्वादनं विहाय तत् तु सखीभिसमं मेव ।

सत्यवती- (नीरवं शृणोति । स्व) एतन् मङ्गलाय एव । गर्भो भवति चेत् गृहावस्थानेन प्रच्छन्नं स्यात् । कौशलेन मासान् नीत्वा समये निर्जनद्वीपं गमिष्यामि । ऋषि- वाक्यं अमोघं । न कोऽपि ज्ञातुं शक्नोति मत् चेष्टितम् ।

—*—

## पञ्चमदृश्यम्

(यमुनागर्भे निर्जनद्वीपे शिलायां शयाना सद्यः पुत्रप्रसविनी सत्यवती । परितः हरिणाङ्गनाः शिशुभिः स्थिराः तिष्ठन्ति । वृक्षशाखासु पक्षिणः कूजन्ति आनन्देन पुष्पाणि चञ्चूभिः मुखमानाः । सत्यवती निःसहाया दिशः पश्यति ।)

सत्यवती- (स्व) क्वास्ते पराशर इदानीं विपत्तिकाले ? सर्वज्ञेन तेनावश्यं पुत्रजन्मकालो ज्ञातो भवेत् । वितथवचना एव पुरुषाः । कार्यकाले चाटुभिः मिथ्याप्रतिश्रुतिभिः पुरुषार्थवचनैः सुखाशया वृथा रंजयन्ति मनांसि कामिनी- नाम् । समये पलायनपण्डित एव ते । किं करोमि शिशुनामुना ? अहो शिशुरयं वपुषा वृद्धिं प्रयाति । इन्द्रजालेन इव वक्तुमारभते सद्योजातोऽपि । सत्यमुक्तं ऋषिणा तर्हि । भगवतः विष्णोरंशेन जन्मास्य स्याद्वा । दर्शने कृष्णाऽपि नयनरमणीया तनुप्रभा । तीक्ष्णानासिका कपोलविस्तृतं । नयनविशालोज्ज्वलं । आयतबाहुचरणाः ।

(सहसा उत्थाय मातरं प्रणमति दैवप्रेरित इव)

शिशुः- मातः ! जन्मान्तरस्मृतिप्रभावात् सर्वे वेदाः स्मृतिपदवीमागता मे । गर्भेऽपि तपसि मनो निधाय स्थितवानहं । अधुना भूयस्तपश्चरितुमिच्छामि । प्रयोजने सति स्मरसि मां । अवश्यमागमिष्यामि । इदानीमनुजानीहि मां यातुं स्वेच्छया (पराशरस्याविर्भावः)

पराशरः- नैव स्वेच्छया यातुमर्हसि वत्स । किञ्चित् प्रवृद्धेनापि असंस्कृतवपुषा कथं तपश्चरणम् ? ऋषिकुमारैः सह स्थातव्यं ते मदाश्रमपदे । तदर्थमेवागमनं मेऽत्र ।

सत्यवती- वत्स । एष ते पिता महर्षिः पराशरः ! नमस्य एव । (शिशुः प्रणमति)

पराशरः सत्यवति ! कष्टमनुभूतं किम् ? विष्णोरंशेन जातोऽयं जगत्कल्याणाय महत्कार्यसिद्धये । अलौकिकमेव ईश्वराणां चेष्टितम् । एतदर्थं चिन्तामाकार्षीः । मदाश्रमपदं प्रयातु सः । जातकर्मादिक अहमेव कारिष्यामि । अद्य आषाढस्य पूर्णिमा । शिशुरयं वर्णेन कृष्णः । द्वीपे च सम्भवोऽस्य तस्मात् कृष्णः, द्वैपायनः, इत्यभिधानं, भवत्वस्य । कालि ! कृष्णद्वैपायन इत्यहं वदिष्यामि त्वदनुस्मृत्यर्थं । काले सूत्रकारः, पुराणसंहिताकारः भूत्वा वेदस्य विभाजनकरणात् वेदव्यास इत्याख्यया प्रसिद्धः जगद्गुरुपदवीं गमिष्यत्ययम् । तज्जन्मदिनमियमपि आषाढी पौर्णमासी काले व्यासपूर्णिमा, गुरुपूर्णिमा इत्याख्यां

धारयिष्यति । पश्चाच्च परितः दिशः प्रसन्नता जलाशयानां निर्मलतां च । यमुना कलगीतेन उल्लसन्तीव, देवाः नभसि प्रमुदिताः शंखमापूरयन्ति स्वनेन । पुष्पवृष्टिं च करिष्यन्ति । सर्वस्त्र मङ्गलसूचना प्रकृतौ । सर्वं शिशोः सौभाग्यं सूचयत्येव । भामिनि ! मा चिन्तया । महत्-सौभाग्यं लप्स्यसे त्वमपि परतः । शिशुरपि समये त्वामेष्यति श्वः प्रभाते द्वैपायनेन सह यास्याम्यहं । त्वमपि इदानीं अव्रणा कन्या च भूत्वा सुस्थचित्तेन गृहं याहि पूर्णिमाचन्द्रस्य पूर्वनभसि आविर्भावात् प्राक् एव ।

सत्यवती- (लोतकं स्रावयन्ती नीरवं प्रणमति पराशरं आलिङ्गति च कृष्णम् । अनन्तरं नदीतीरं गत्वा नावा गृहं प्रत्यावर्त्तते द्वीपं दर्शं दर्शं दुःखिता उदासचित्ता ।)

—*—

## षष्ठदृश्यम्

(गङ्गातीरे मनोरमे गोधूलिआश्रमे गौतमपराशरादय उपविष्टाः स्वाध्यायानन्तरम्)

गौतम- पराशर ! उपनयनान्ते द्वैपायनस्य तेजः अद्भुतं वर्द्धते । कृष्णकायस्य तस्य विशालकाललोचनाभ्यां कारुण्यं क्षरतीव । कृपता च तथैव लक्षिता तस्मिन् मातुलाभ्यां

दुःखहरणाय। विस्मयकरी प्रतिभा स्मृतिशक्तिश्च पञ्च-वर्षेऽपि। अध्ययनकाले सकृत् श्रुत्वैव सर्वमधिगतमनेन। सामगानमपि करोति अविकलं स्वमिव।

पराशरः- द्वैपायन द्वैपायन!

द्वैपायनः- एषोऽहमत्रागतः।

पराशरः- आचार्यगौतमं नमस्कुरु। तेन द्विजन्मा त्वं संजातः सावित्रीप्रदानात् वेदेषु अधिकारः प्रदत्तः तुभ्यं। रुद्राक्ष-मालामजिनं गृहीत्वा सामगानं साधु ब्रह्मचारिण स्ते। गायत्रीजपेन सवितुः उपस्थानं च साधु। तत्सर्वं सुष्ठु कृतं त्वया। आचार्यस्य प्रीत्यै कमण्डलुभिक्षापात्रं गृहीत्वा ग्रामात् भिक्षासंग्रहोऽपि कर्त्तव्यस्ते।

कृष्णः- (प्रमुदितः) अस्तु अस्तु। हरिणशिशुभ्यः केवलं घासं ददाम्यधुना। आहृते भिक्षान्ने तान् पुस्कलं भोक्तुं दास्यामि विविधानि द्रव्याणि येन ते उल्लसिताः क्रीडिष्यन्ति मत् परितः। मत्स्येभ्योऽपि गङ्गायां सिद्धान्नं दास्यामि। देवलेन सार्द्धं सत्वरं यामि अस्मि-न्नेव प्रभातकाले।

(ब्रह्मचारीवेशेन भिक्षापात्रं गृहित्वा ग्रामं गच्छति)

द्वैपायनः- भवन् भिक्षां देहि।

अपरगृहकर्त्री- कोऽयं नवीनब्रह्मचारी? अतीवमधुरमावाहनमस्य दृष्ट्वा क्षीरं स्रवति स्तनाभ्याम्। ~~शीघ्रं~~ अत्रागच्छ। अत्रागच्छ ब्रह्मचारिन्। किं नाम ते?

देवलः- आचार्य पराशरस्य पुत्रोऽयम् । सप्ताहात् प्राक् गायत्र्या-
दीक्षितः आचार्यगौतमेन । कृष्णः द्वैपायनः कृष्णद्वैपा-
यनः इति वदन्ति तम् ।

गृहकर्त्री- कृष्ण ! अस्मद् गृहे भोजनं कुरु । प्रथममागतोऽसि ।

कृष्णः- मातः ! न तथा कर्त्तव्यम् । भिक्षान्नं गृहीत्वा आचा-
र्याय दातव्यम् देवतातिथिभोजनान्ते विद्यार्थिनामस्मा-
कम् युगपत् भोजनम् । नहि यत्र तत्र यदा तदा वा ।

गृहकर्त्री- (विहस्य) सप्तदिवसेष्वपि एवं शिक्षितं त्वया ।
अस्तु । किञ्चित् तक्रपानं कुरु । पूर्वाह्णं गतमिव ।
सूर्यरश्मेः प्रखरता चानुभूता । क्षणं विश्रम्य पश्चाद् याहि
गुरोराश्रमं । इमानि भोज्यद्रव्याणि फलमूलानि च
भिक्षारूपेण गृहाण आश्रमार्थम् ।
(ददाति भिक्षापात्रे । तक्रं पिवतः कृष्णदेवलौ)

—०—

## सप्तमदृश्यम्

(शून्यपात्रेण प्रत्यागतः द्वैपायनः आश्रमसीमान्तं प्रविष्टे)

असितः- द्वैपायन ! कथं शून्यं भिक्षापात्रं ते न कोऽपि दत्तवान्
तुभ्यं किञ्चिदपि ?

द्वैपायनः– दत्तवन्त एव । परन्तु ग्रामाद् वहिः क्षुधातुराः शिशवः याचितवन्तः मां अन्यत्र प्रस्थिते देवले । भिक्षान्नं तेभ्यः प्रदत्तम् । बुभुक्षवस्ते आसन्नेव । तस्मात् निषेद्धुं न शक्नुवानहम् । आश्रमसीमान्तं यावदपि आगतवन्तस्ते हर्षिताः । (केचित् दीनबालकाः पुनरागत्य)

बालकाः- सर्वेपि ते त्वत्तः भोज्यं गृहीतवन्तः । वयं न किंचिदपि अभुक्ता एव वयमभावात् एतावता । अस्मान् अनुग्रहीतुमर्हसि द्वैपायन ।

द्वैपायनः– (चिन्तितः) क्षणं तिष्ठत । सवितरं प्रार्थये । स एव रक्षको नः प्रतक्षब्रह्मत्वात् ।

(आचमनं कृत्वा कमण्डलुजलेन सूर्यं वीक्ष्य)

" ॐ असावादित्यो ब्रह्म । उदुत्यं जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्यम् ।

ॐ उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमं । ॐ विश्वानि देव सवितु दुरितानि परासुव । यद्भद्रं तन्न आसुव ।

ॐ हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्
तत्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ।
त्वं भानो जगतश्चक्षु स्त्वमात्मा सर्वदेहिनां
त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावताम् ।
त्वं ममापन्नकामस्य सर्वातिस्थ्यं चिकीर्षतः
अन्नमन्नपते दातुमभितः श्रद्धयार्हसि ।

क्षुभया सहिता मैत्री याश्चान्या भूतमातरः
ताश्च सर्वा नमस्यामि पान्तु मां शरणागतम् ,,

देव सवितः ! आर्त्तानां दुःखहरणाय मह्यं पुष्कलं भोज्यं प्रदेहि । स्वयमभुक्त्वापि एभ्यो बालकेभ्यो दातुमिच्छामि भोजनम् । न कोऽपि प्रार्थी विमुखो भवतु मत्तः । (प्रणमति)

(सहसा कश्चिदागन्तुक आगत्य भोज्यद्रव्याणि प्रचूर० फलमूलानि च कृष्णाय ददाति)

आगन्तुकः- नवीनब्रह्मचारिन् । मत्प्रभुणा प्रदत्तमेतत् त्वदर्थं (याति) ।

कृष्णः- एतत् भगवता सवित्रा एव प्रदत्तम् । बालका ! गृह्णध्वं । हस्तं प्रसारयत ।

(ददाति । सर्वे ब्रह्मचारिणः गत्वा आचार्य गौतमं प्रणमन्ति)

असितः- आचार्यपाद ! अद्भुतं कर्म कृतमद्य द्वैपायनेन । ग्रामात् संगृहीतान्नं सर्वं वितरितं तेन याचकेभ्यः । बालकैः पुनर्याचितः सन् सर्वत्र संप्रार्थ्य कस्मात् आगन्तुकजनात् भूयो भोज्यं प्राप्य आश्रमसीमान्ते एव दरिद्रबालकान् क्षुधातुरान् दत्तवानयम् ।

गौतमः- स्वयमहं प्रच्छन्नं तत्रस्थित्वा दृष्टवान् तत् चेष्टितम् । चिरं जीवतु द्वैपायनः । अमुना एव अस्मद्देशात् दुःख-



मज्ञानं दूरीकरिष्यति ।

द्वैपायनः- (आगत्यप्रणमति आचार्यम्)।

गौतमः- (कृत्रिमक्रोधात्) द्वैपायन ! आश्रमार्थं लब्धद्रव्येषु न तेऽधिकारः। तानि मह्यमाचार्यायाप्रदाय यत् त्वं दीनबालकेभ्यः दत्तवानसि तत् धृष्टता अशालीनता एव। अतस्ते मुखं नाहं पश्यामि।

द्वैपायनः- (दुखितः) प्रमादात् यत्कृतो दोषो बालकेनाप्य-बुद्धिना। गुणेन स्वस्योदारेण तदपि क्षन्तुमर्हसि। पूज्यपाद ! अबोधस्यप्रमाद एवैतत्। कृपया क्षमस्व।

गौतमः- निश्चयान्नावतरेयम्। पदेनैव पश्यामि त्वाम्। (पदे चक्षुः प्रकाशः)

द्वैपायनः- (विस्मितः) शिवस्य ललाटे नेत्रम् परन्तु आचार्यस्य पदेऽपि चक्षुः। अक्षपाद। अबोधे मयि तव करुणा इयमेव। कृतार्थोऽहमामततेजसस्ते प्रसादात्।

गौतमः- द्वैपायन ! दुखं मा कुरु। चिरंजीव। एवं करुणा स्यात् ते सर्वदा सर्वेषु जीवेषु मनुष्येषु च दुःखयन्त्रणा निपीडितेषु। परोपकाराय एव सतां विभूतयः। मन्त्रसिद्धिः योगसिद्धिरपि ते भवत्वचिरात् येन विभूतिमान् त्वं लोकानां क्लेशहरणं करोषि। त्रयी-विद्याप्तिस्ते पूर्णतया भवत्वचरेण। सर्वेऽपि मन्त्राः त्वन्मुखे विशन्तु मद्वचनात्।

(द्वैपायनः प्रणमति पदे आचार्यस्य)



## अष्टमदृश्यम्

(आश्रमे विषण्णः द्वैपायनः चिन्तामग्नः)

द्वैपायनः- (स्वं) मातृस्नेहात् वंचितेन तपश्चरितुकामेन मया पितुः स्नेहपाशेन आबद्धत्वात् विद्यार्जनेन कालोनीतोऽत्र। इदानीं सोऽपि दिवं गतः । तदनन्तरं आचार्यगौतमोऽपि सपरिवारः तीर्थयात्रायां प्रयातः । किमत्रस्थितेन भूयो मया । कथं रक्षसा वन्यपशुना वा भक्षितो मे जनकः निःसहायः । अन्त्येष्ठिकृत्यमपि तथा न कृतं मया अस्थ्यभावात् ।

देवलः- द्वैपायन । नेत्थं विषादेन । जडशरीरमेव आचार्य पराशरस्य नाशं गतम् । स तु अमरत्वमितः स्वकृतिभिः । पराशरहोरा, पराशरसंहिता, पराशरगीता इत्यादि ग्रन्थास्तस्य शाश्वती कीर्त्तिरेव । ब्रह्मविद्याया अन्तिम-प्रवक्ता स एवासीन् पृथिव्याम् नारायणीयधर्मपरम्परायाः अन्तिमगुरुत्वात् एतावता । सैव परम्परा त्वया रक्षणीया यतस्त्वमपि पितुः सकाशात् अल्पेऽपि वयसि ब्रह्मविद्यायाः बीजं प्राप्तोऽसि ।

द्वैपायनः- त्रैविद्या स्वर्गायमुक्तये वा स्यात् परन्तु आथर्वण-मन्त्राणां उपयोगः भुक्तये प्रयोजनीय एव यद्यपि वा वाशिष्ठैः अस्वीकृतं तस्य वेदत्वं । जनको मे स्वयं

वदति स्म अथर्ववेदस्य शिक्षणीयत्वविषये । वशिष्ठवंशो-
द्भवत्वात् आथर्वणाः न तथा सहानुभूत्या पश्यन्ति
मां शिक्षार्थिनमपि ।

देवलः- अधुना वर्षिष्ठो जावालिरेव प्रसिद्ध आथर्वणः। तव
पितामहस्य वशिष्ठस्य समकालीनः सोऽत्राश्रमे तिष्ठति स्म
इति श्रुतं मे। अनन्तरं मतान्तरात् तेन पलायितमितः।
सोऽधुना तिष्ठति आश्रमं निर्माय सपरिवारः शिष्यैर्वृतः
तत्र महारण्ये । आत्मनः छद्मपरिचयप्रदानेन तत्र तव
शिष्यत्वं स्वीकृत्य आथर्वणमन्त्राणां शिक्षादिकमाप्नुहि
इच्छसि चेत् ।

द्वैपायनः- अहो प्रागेव शिक्षितश्चेत् तन्मन्त्रप्रयोगात् वन्यपशोः
कवलात् पितुः प्राणरक्षणं सम्भवति वा । किमत्र पश्चा-
त्तापेन । अथर्ववेदशिक्षां कृत्वा तत्प्रचारं कारयिष्यामि
राजशक्त्या लोकानां उपकाराय ऋषीणां विवाद-
निरसनाय च । वैदिकशिक्षासंस्कृतिरेव सनातनधर्मस्य
आधारः । तत्र विभेदश्चेत् कथमभ्युदयः स्यात् वा
देशस्य लोकस्य च । एतदर्थं प्राणानपि त्यक्ष्यामि
प्रयोजनं चेत् । पितुः महाप्रयाणात् आचार्यस्य च
स्थानत्यागात् स्थानमिदं न रोचते मह्यं। देशान्तरं
गमिष्यामि जैमिनीपैलादि सार्द्धम् ।

देवलः- ( नीरवं शृणोति । ) यथेष्टमाचर ।

—*—

# द्वितीयांकः

## प्रथमदृश्यम्

(धर्मक्षेत्रे यज्ञाग्निसमीपे उपविष्टौ पैलद्वैपायनौ)

पैलः- द्वैपायन । गोधूलिं परित्यज्य अत्रागमनं, अविवेकोऽस्माकम् । धर्मक्षेत्रस्य पुनरुद्धारः न सम्भवेत् आवाभ्याम् । नूनं अभिशप्ता इयं भूमिः । महारण्येऽत्र क्षुत्तृषार्तौ आवां किं वा कर्तुं शक्नुवः । प्रमादो वर्त्तते एव ते निश्चये ।

द्वैपायनः- प्रतिज्ञातं मया पितुः पुरस्तात् पुनरुद्धाराय धर्मक्षेत्रस्य

पैलः- तर्हि तूर्णं पितुः समीपं याहि । अनन्तरं त्वदृते मत्-प्राणहानिः सरसि निमज्जनात् ।

द्वैपायनः- त्वं तर्हि गोधूलिं प्रत्यागच्छ ।

पैलः- नहि त्वामत्र समर्प्य यमाय । हातुं न शक्नोमि न वा स्थातुं त्वया सह। असम्भवेऽस्मिन् कर्मणि कस्मात् तेभिनिवेश ? (सहसा राक्षसानामाविर्भावः । वंशदण्डेन प्रहारः । पैलद्वैपायनयो संज्ञालोपः । जाबालिशिष्याणां प्रवेशात् रक्षसां पलायनम्)

शिष्याः- द्विजपुत्रौ व्यापादितौ राक्षसैः । प्राथमिकचिकित्सानन्तरं आचार्यसमीपं नयामः स्कन्धेकृत्वा ।

(पत्ररसं नासिकायां ददाति आचार्यस्य समीपे। क्रमशः द्वैपायनस्य संज्ञाप्राप्तिः। जावालि वीस्य प्रणन्तुं चेष्टते)

आचार्यजावालिः- मूढस्येव मा समाचर।

द्वैपायनः- (क्षणान्ते) भवतारक्षितोऽहं। उरवुः मे का दशास्यत् ?

जावालिः- जीवति स एव। अत्रागमनं मूर्खता एव युवयोः। (पैलस्य मुखे ओषधिपत्ररसं दत्वा मन्त्रपाठात्) परन्तु कस्त्वम् ? कथमत्र अभिशप्तारण्यप्रदेशं आगतः। ममाभिशापात् हैहयैः विनष्टमिदं धर्मक्षेत्रम्। रक्षसामाक्रमणकाले युवां किं कृतवन्तौ ? दिष्ट्यावयमागता अत्र दर्शस्नानाय। सुमन्तो ! एतौ आश्रमं आनय।

द्वैपायनः- वेदवादी श्रोतियद्विजोऽहम् वशिष्ठस्य नप्ता पाराशरः नाम्ना द्वैपायनः। पैलः सोऽपि द्विज एव।

जावालिः- वशिष्ठस्य नप्ता। (गन्तुमुत्तिष्ठति)

द्वैपायनः- भ्रातः ! सुमन्तो ! कोऽयं महात्मा वर्षीयान् पुरुषः ? दर्शनस्पर्शनापि यन्त्रणां शमयति पीडितानाम्।

सुमन्तुः - महार्थवणं महर्षिजावालिं न जानासि ? अङ्गीरसभृगूणां पथावलम्बात् अथर्ववेदोक्तब्रह्मविद्यायां परिनिष्ठितोऽत्रभवान्। (मत् प्रकोष्ठेस्थातव्यं ते )

द्वैपायनः- (सायं जावालिमुपगम्य) आचार्यपाद। शिष्यत्वमिच्छामि। कृपया स्वीकुरु मां।

जावालि:- (तीक्ष्णं विलोक्य) परन्तु धर्मक्षेत्रस्य पुनरुद्धारचेष्टा परिहर्त्तव्या आदौ ।

द्वैपायन:- भगवन् ! प्रतिज्ञां कथं त्यजेयम् ।

जावालि:- तर्हि परिणाम: भुक्तव्य: । (सर्वेषां प्रस्थानं । भोजनान्ते सुमन्तुप्रकोष्ठे द्वैपायनस्य विश्राम: । वाटिकाया: आगमनं पश्चात्)

वाटिका- भ्रात: ? द्वैपायन: सुप्त: किमु ? तस्य जीवनसंशय: पितु: क्रोधात् आभिचारिकक्रियाभि: श्व: प्रभाते । तमुत्थापय सत्वरं ।

द्वैपायन:- (विस्मयात्) परन्तु केनापराधात् हन्तव्योऽस्मि ?

वाटिका- नहि विचारस्य कालोऽधुना । तूर्णं प्रयाहि आश्रमात् औषधै: सह जीवितुं इच्छसि चेत् जावालेरभिचारात् । वृथावाक्येन कालक्षेपं मा कुर्यात् । शीघ्रं पलायस्व । औषधिप्रयोग: कर्त्तव्य: मन्त्रोच्चारणं विनापि ।

द्वैपायन:- मन्त्रस्तु मनसि कृतो मे मुने: द्वि:पाठात् ।

वाटिका- स्मृत्या धारयसि मन्त्रान् एवमनायासेन । अद्भुता ते शक्ति: । एवं भवेत् चेत् ममापि ।

द्वैपायन:- नक्तं कथं गन्तव्यं मे अज्ञातप्रदेशेऽत्र । पैलस्य का दशा भविष्यति ?

सुमन्तुः- पैलार्थं चिन्ता मा स्यात् । तं वयं पश्यामः । पर्वतपादं यावत् आत्रां यावत्संगोपनेन । ततः त्वं प्रयाहि ।
(पाददेशं प्राप्य)

द्वैपायनः- सुमन्तो ! महामुनिर्जाबालिः गुरुत्वेन वृतो मया । तत्पुत्रत्वात् त्वं मम भ्राता एव । (आलिङ्गति) वाटिके ! अविस्मरणीया एव ते करुणा । शीघ्रमागच्छामि भूयोऽत्र । धर्मक्षेत्रं पुनरुद्धारणीयं त्वत्सहायेन मया मुनेरनुग्रहात् ।

—※—

## द्वितीयदृश्यम्

(जाबालेराश्रमः । वाटिका एकाकिनी चिन्तिता)

वाटिका- (स्वं) लोकाः विचित्रं जल्पन्ति द्वैपायनस्य विषये । नवदिनानि यावत् मन्त्रविद्यायाः प्रयोगात् महाराजः शान्तनुः मुमूर्षुरपि पुनर्जीवितस्तेन । गाङ्गेयस्य आदेशेन धर्मक्षेत्रस्य संस्कारः कृतः वाजपेय यज्ञोत्सवाय ।

(सुमन्तोः प्रवेशः)

सुमन्तुः- न केवलं तत् । तस्मिन् यज्ञकर्मण्यपि अथर्ववेदिनापि ब्रह्मात्वं स्वीकृतं भविष्यति । ऋषयोऽपि वत्स्यन्ति तत्र वैदिकधर्मस्य प्रचारार्थं द्वैपायनस्य प्रीतये । तत्संजीवनमन्त्रास्तु अस्मत् पितुः मुखात् सकृत्

श्रुत्वापि मनसि निहितवान् सः । एवं गुणवन्तमपि पिता नः हन्तुनैच्छत् तस्य वशिष्ठवंशोद्भूतत्वात् । दीर्घयत्नेनापि यदसिद्धं पित्रा तदपि अनायासेन साधितं तेन । अथर्ववेदस्य वेदत्वं स्वीकृतं वशिष्ठानुयायिभिः हस्तिनाराजसभायां तत् प्रयत्नात् इति श्रूयतेऽपि ।

वाटिका- गमनसमये सोऽप्युक्तवान् यत् अस्मत् पित्रानुगृहीतेन तेन धर्मक्षेत्रस्य पुनरुद्धारः कर्त्तव्यः ।

सुमन्तुः- अचिन्त्या तस्य धियः प्रवृत्तिः मम । पुनरागते तस्मिन् पितरं क्षमापयिष्यामि । (वाटिकायाः वैमनस्यं विज्ञाय हसन् निर्गतः)

—*—

## तृतीयदृश्यम्

(जावालेराश्रमः । शिष्याः विचरन्ति पर्वतशिखरे)

शिष्याः- शिखरमागच्छति कश्चित् जनः । (निरीक्षणं) दूरेऽपि धूलिपटलं आकाशमुद्गच्छति । किञ्चित न ज्ञायतेऽत्र हेतुः । आचार्यपादं कथयिष्यामः ।

सुमन्तु- (निरीक्ष्य) स इव दृश्यतेदूरात् । स एव द्वैपायनः पुनरागच्छति । न प्रमादः स्यादत्र मे । यामि पितरं ।

(द्वैपायनस्य प्रवेशः)

द्वैपायनः- (आलिङ्ग्य) गुरुदर्शनाय अनुमतिः प्रार्थ्यते मया ।

सुमन्तुः- स तु क्रुद्धस्त्वयि । अहितं स्यात् तद्वेदने ।

द्वैपायनः- तदर्थमेवागतः । गुरोरिच्छापूरणाय । (सुमन्तुः याति)

जाबालिः- दिष्ट्यागतः द्वैपायनो भूयोऽत्र । हन्तव्योऽस्ति अप्रमत्तेन मया इदानीमभिचारात् ।

सुमन्तुः- तदर्थं गुरोस्ते इच्छापूरणाय एव तस्यागमः इति तेनोक्तम् ।

जाबालिः- (विस्मयात्) तदर्थं । गुरोरिच्छापूरणाय । परन्तु नहि स शिष्यः कृतो मे । मदप्रियसाधनाय यत्नवान् स एव धर्मक्षेत्रस्य पुनरुद्धारविषये । वनानि परिस्कृतानि । वन्यपशवोऽपि निराकृता राजाज्ञया व्याधैरिति श्रुतं मया । तथापि आगच्छतु ।
(द्वैपायनस्य प्रणामः)

द्वैपायनः- अपराधक्षमापनेन भवन्तं प्रीतायितुं आगतोऽहं । यथेष्टमाचरतु भवान् । विनानुमत्या आश्रमं त्यक्तवानहं । दण्डनीयोऽहं । परन्तु भवदिच्छापूरणाय एव गतवानहम् ।

जाबालिः- मदिच्छापूरणम् ?

द्वैपायनः- वशिष्ठद्रोहात् धर्मक्षेत्रं अभिशप्तं भवता, अथर्ववेदस्य प्राधान्यस्य अस्वीकरणमेवात्र हेतुः । परन्तु सम्राजः शान्तनोराज्ञया तत्र भविष्यमाणे वाजपेययज्ञकर्माणि

ब्रह्मापदमलंकरिष्यति अथर्ववेदीयः कश्चित् श्रोत्रिय एव।
सम्राजश्च पुनर्जीवनं भवन्मन्त्रप्रयोगादेव ।

जाबालिः- परन्तु मंन्त्रो न दत्तः तुभ्यं मे ।

द्वैपायनः- अनिच्छयापि दत्त एव । पैलस्य संजीवनसमये भवतः तन्मन्त्रपाठः श्रुतो मया । ततः प्रभृति स्मृत्या धारयामि ।

जाबालिः- असम्भवं । उच्चारणेन सह मन्त्रं सप्रयोगविधिमपि ज्ञातवानसि ।

द्वैपायनः- परन्तु तेनैव मन्त्रेण तथा मनसि स्थितेन सम्राजः रुजः उपशमः ।

जाबालिः- औषधिपत्रं विनापि ?

द्वैपायनः- न हि । तदप्यधिगतमासीन् मे भवदाश्रमात् ।

जाबालि - तथापि न मत्शिष्योऽसि ।

द्वैपायनः- शिष्यीभूत एव । अन्यथा कथं भवतः निश्चयः मद्विनाशाय अनुमतिं विना आश्रमत्यागात् । कथमेव-मधिकारस्ते मयि जायते वा ? (जाबालेः विचरणं भूमौ)

जाबालिः- (स्वं) विचित्रं कथयति । गुणवान् साधुर्विनीतोऽस्ति परन्तु कथं जहामि मन्निश्चयं । (वाटिकां विषण्णां विलोक्य । प्रकाशं) परन्तु चौराणां शासने सर्वेषा-मेवाधिकारः स्यात् ।

द्वैपायन - भवता यत्नो विधेयः ब्रह्मपदग्रहणात् अथर्ववेद-प्रतिनिधित्वेन । राजपुरोहितैः स्वीकृतमेतत् । कुरवः धर्मपोषका एव । ब्रह्मतेजः परिरक्षितं क्षात्रतेजसा इदानीं । तत् प्रतिवचनात् देशस्य प्रजानां च मङ्गलं स्यात् । श्रोत्रियाः अपि परिवारेण सह समागता मया सह धर्मक्षेत्रे निवासाय धर्मरक्षार्थं । आश्रमार्थं साम्राज्ञापि गवां शतत्रयं प्रदत्तम् । पाददेशे वर्त्तन्ते शतशः ते श्रोत्रियाः भवदनुग्रहं कामयमानाः । इदानीं यथानिश्चितं विनाशयतु मां भवान् ।

जावालिः- अतीव असाधुस्त्वमसि । शिष्यस्त्वं स्वीकृतं त्वया परन्तु मदिच्छाविरोधः कृतः आश्रमत्यागात् । औषधि संग्रहात् चौर्यमपि कृतम् । शान्तनुः पुनर्जीवितः मदनुमतिं विनापि । आश्रमं पुनः स्थापयसि धर्मक्षेत्रे मद्विरोधं ज्ञात्वापि । त्वदानीतैः शिष्यैर्पशुभिर्वा नहि मे प्रयोजनम् । यथार्थतः दण्डनीयोऽसि । प्रस्तुतो भव । मृत्योरपि गरीयांसं दण्डं दास्यामि । वाटिकया आबद्धो भव । सापि दण्डनीयास्ति तुभ्यं औषधि-प्रदानात् वाटिके ! अत्रागच्छ । मिथोऽनुरागः स्याद् युवयोः मद्वचनात् । (हसति । सर्वे विस्मिताः द्वैपायनोऽपि । वाटिका भूमिं लिखति पदनखेन)

—*—

## चतुर्थदृश्यम्

(सरस्वतीतटे तपस्यारतः व्यासः । वृक्षशाखायां शुकपक्षिणौ शावकं खादयतः । शङ्करस्याविर्भावः । इन्द्रस्यागमनम्)

इन्द्रः- ईशान ! तपसिरतस्य पराशरसुतस्य तेजसा दिशश्छादिताः । महद् भयं मनसि जायते मे ।

महादेवः- सुरेश ! तपोगर्हणं मा कुरु । जगद्धिताय एव ब्राह्मणानां तपस्या । पाराशरः पुत्राय तपसि यतमानः । मा भयेन । (इन्द्रस्य प्रस्थानं प्रणामान्ते)

(शङ्करप्रभावात् व्युत्थानम् व्यासस्य)

व्यासः- एतावतापि भगवतः मयि प्रसादो न जातः । कथं विघ्नं संजातं तपसः ? (क्षुब्धः दिशः पश्यति) अहो आश्रमपक्षिणोः शावकोऽयम् । पक्षं रोमाणि च न प्ररूढानि । महता यत्नेन शावकं भोजयतः पक्षिणौ । मुहुरपि कणं यच्छतः तन्मुखे अतिस्नेहेन । अण्डजानां एवमपत्यस्नेहश्चेत् किं पुनः मानवानाम् । स तु वार्द्धक्ये पुत्रात् एव सेवामपेक्षते । ज्येष्ठाश्रमः गृहस्थाश्रमः आश्रमेषु नूनं श्रेष्ठः पुत्रप्रदत्वात् स्वर्गप्रदत्वात् च । काले ज्ञाने जाते मोक्षप्रदोऽपि स एव । इतराश्रमाः अनेन एव जीवन्ति अतः भूयस्तपसे यास्यामि मन्दराचलं ईश्वरीं प्रसादयितुं तेजस्विपुत्राप्तये ।

(सहसा शिवस्याविर्भावः)

महादेवः- वासवीनन्दन द्वैपायन ! पुनस्तपसा न प्रयोजनम् । तपसः फलदाताहं प्रसन्नोऽस्मि । अग्निरिव वायुरिव तेजस्वी सत्यपराक्रमी यशस्वी पुत्रस्ते भविष्यत्य चिरात्। वेदनां विभाजनेन महत् कल्याणं कृतं त्वया लोकानाम् । तस्मात् वेदव्यास इति नाम्ना जनाः व्याहरिष्यन्ति त्वां आदरात् इतः परं । सत्यवतीनन्दन । वैवस्वतमन्वन्तरे त्वमेव अष्टाविंशतितमः व्यासः ।

(अन्तर्द्धानम् घृताच्यप् सरसः आविर्भाव)

व्यासः- कथं घृताचेराविर्भावः अत्रासमये ? दर्शनात् कामो-जायते मे शरीरे तपसः व्युत्थितस्यापि । परन्तु देवकन्येयं न ममानुरूपा ।

घृताची- (स्वं) मां विलोक्य चिन्तितः दृश्यते द्वैपायनः । तपोविघ्नं विचार्य शापं प्रदास्यति । (शुकीरूपग्रहणँ)

व्यासः- अहो मनोरमं शुकीरूपं अनया गृहीतम् । पुत्रलाभाय वरप्राप्तिसमये घृताच्या दर्शनात् शरीरे कामसंचारः आसीत् । अनन्तरं तस्याः शुकीरूपस्य रमणीयत्वं मनसि प्रतिष्ठितम् । अतः शुकदेव इति नाम रक्षयिष्यामि सुपुत्रे जाते सति । (प्रस्थानम्)

—*—

## पञ्चमदृश्यम्

(हस्तिना राजप्रासादः। सत्यवतीभीष्मयोरालोचनम्)

सत्यवती- गाङ्गेय । पितुरनन्तरं भ्रातरावपि दिवं गतौ वंशधराननुत्पाद्य । दाराणां परिग्रहे ते का हानिः ?

भीष्मः- मातः ! क्षत्रिये सत्यात् च्युतिः न शोभते । तस्मात् कथमपि प्रतिज्ञा मिथ्या न क्रियेत । परन्तु भरतवंशस्य दायादः स्यात् इति मे वाञ्छा । तदर्थं गुणवता ब्राह्मणेन नियोगः कर्त्तव्यः विचित्रवीर्यस्य क्षेत्रयोः धनस्य विनिमयेन । इत्येव आपद्धर्मः अस्माकं पालनीयः पूर्वं पूर्वं दृष्टान्तात् ।

सत्यवती- देवव्रत ! अस्मत्कुले त्वमेव साक्षात् धर्मस्य मूर्त्तिमान् वर्त्तसे । सत्यनिष्ठत्वात् त्वमेव नः परमाश्रयः । त्वयि विश्वासात् पूर्ववृत्तं ब्रवीमि । निशम्यताम् । महर्षि-पराशरस्य पुत्रं कृष्णद्वैपायनं त्वं जानासि येन कैशोरेऽपि मन्त्रविद्यया ते पितुः निरामयत्वं विहितम् ।

भीष्मः- जानामि तं मातः। अस्मत्सहायात् तेन धर्मक्षेत्रस्य पुनरुद्धारं कृत्वा पराशराश्रमः संस्थापितः तत्र । सोऽपि तपोबलेन वेदान् चतुर्धा व्यस्य वेदव्यास इत्यभिधानेन लोकेषु प्रथितः । परन्तु स इदानीं बदरीवने बद्रिकायां वसति नरनारायणयोः विहारभूमौ ब्रह्मसूत्रस्य प्रणयनानन्तरं पुराणसंहितानां सृष्टौ मतिं निविश्य ।

बदरीवने निवासात् तं बादरायण इति केचिदपि कथयन्ति अधुना ।

सत्यवती- स एव तपसा दग्धकिल्बिषः शमितेन्द्रियः सत्यवादी व्यासः मम कानीनपुत्र एव पराशरेण ऋषिणा घटनाक्रमेण । जन्मनः परं सद्यो देहवृद्धिमाप्नुय पित्रा सह तपसे प्रस्थितवान् सः । तवानुमत्या मया जनन्या आदिष्टः चेत् स पुत्रान् जनयिष्यति एव अम्बिकायाम् ।

भीष्मः- (चमत्कृतः) मातः । दुरवगाहनीया एव ते धियः सीमा । भगवति वेदव्यासे स्वीकृते सति एतत्कार्यं कथं मे विरोधः स्याद् वा । तन्नः महद्सौभाग्यमेव ।

सत्यवती- "स्मरणादागन्तव्यं मे" इति प्रतिश्रुतं तेन मत्पुरतः प्राक् । (मनसा स्मरणं । व्यासस्य सहसा आविर्भावः तयोः पश्यतोः मात्रे प्रणामः । तस्य सत्कारः । भीष्मस्य प्रणामः सत्कारश्च)

व्यासः- मातः ! त्वत्स्मरणात् आसने स्थातुं न शक्तोऽभूत् किं वा करणीयं मे ब्रूहि । अवश्यं साधयिष्यामि त्वत् प्रीतये ।

सत्यवती- (आनन्दाश्रुं निःस्राव्य) कृष्ण ! त्वद्दर्शनात् तृप्तोऽहं भूयसा । सर्वज्ञाय तुभ्यं किं वा वाच्यं स्यात् । तथापि कथयामि । शृणु । सत्यप्रतिज्ञस्य भीष्मस्य ब्रह्मचारीत्वं जगतप्रसिद्धं । मत्पुत्रयोः चित्राङ्गद-

विचित्रवीर्ययोरकालमरणात् साम्प्रतं कुरुवंशस्य उच्छेदकालोऽयमागतः । वंशरक्षणाय त्वामहं संस्मृतवती भीष्मेनानुमता । त्वत्तः लज्जसे कथितुं सः । पितुरिव मातुरपि पुत्रेऽधिकारोऽस्ति । अहं ते जनयत्री । अतः ममाज्ञया पुत्रकामायां युवत्यां अम्बिकायां अम्बालिकायां च पुत्रोत्पादनं कुरु सत्वरमस्मत् कुलरक्षार्थम् । न कोऽपि राजा विद्यतेऽधुना कुरूणां राज्ये ।

व्यासः– मातुरादेशस्य पालनं धर्म एव मे । परन्तु अव्रतधारणी नहि कापि कामिनी मामुपेतुं शक्नुयात् । इदानीं अकालिकपुत्रोत्पत्त्यर्थं तयोः श्रद्धाया आवश्यकता मयि । विरागः मा स्यात् तयोश्चेतसि तपस्विनो मे रुक्षवेशात् भस्माभरणात् च । अवश्यं कुरुवंशस्य रक्षा भविष्यति अचिरेण पुत्रत्रयेण भिन्नमातुः प्रसूतेन । परन्तु मातृदोषात् अम्बिका पुत्रस्य अन्धत्वात् न राज्यभारवहनक्षमत्वम् । अम्बालिकायाः पुत्रे पाण्डुगात्रत्वेऽपि राज्यभारस्य निक्षेपः भविष्यति । तृतीयस्तु उदारबुद्धिमान् महात्मा भविष्यति । इति भवितव्यं प्रतिभाति मे । तस्मात् नाहं निन्दितव्योऽत्र । संप्रति गङ्गातटं गच्छामि । समये आगमिष्यामि ।

(व्यासस्य अन्तर्द्धानं । सत्यवत्याः उद्वेगः । भीष्मस्य विस्मयः)

## षष्ठदृश्यम्

(पराशराश्रमे वाटिका व्यासः पुत्रः शुकदेवश्च उपविष्टाः)

वाटिका- शुक ! त्वयि पलायिते सति नाहमत्र स्थातुं शक्नोमि । त्वदृते अरण्यमिव आश्रमम् । पिता ते भगवान् बादरायणः योगेश्वरः सर्वज्ञश्च । तस्मात् ज्ञानमाहृत्य अत्र एव दारपरिग्रहात् गार्हस्थ्यधर्मं समाचर। जानेऽहं जन्मकाले ते पुष्पवृष्ट्या सह कमण्डलुभस्मदण्ड-मृगचर्मादिकं देवतैः दिव्यगानेन सह दिवः पातितम् । सद्यः शरीरवृद्धौ त्वमपि पितुरिव तपसे यातुमुत्साहं दर्शितवान् देवभाषाव्याहरणात् जन्मान्तरसंस्कारप्रभावात्। पश्चात् यज्ञोपवीतं दापयन् ते पिता बृहस्पतेः सकाशं अध्ययनाय प्रेषितवान् त्वाम् । समावर्त्तनान्ते भूयोऽपि पितुर्नियोगात् राज्ञा जनकेन जीवन्मुक्तेन संबुद्धस्त्वं पुनः कुत्र गन्तुमिच्छसि मां विहाय । एष ते पिता आगच्छति । सोऽपि दुःखितः एव विज्ञाय ते मनोगतम् ।

व्यासः- वत्स शुक ! सर्वं जाने त्वन्मनोगतम् । परन्तु त्वयि पुत्रे महती आशा मे वर्त्तते । पितृऋणं मोचयितुं अर्हसि एव । जनकस्तेऽहं । मद्वचनं नातिक्रमणीयम् । अन्येऽपि आश्रमाः गृहस्थाश्रमेण जीवन्ति । विवाहात्

पुत्रमुत्पाद्य जगत्हिताय यतस्व । इयमेव सनातनी रीतिः आर्याणाम् । सन्यासे क्लेशो वर्त्तते । जीवनमुक्तं जनकं प्रत्यक्ष्यं दृष्टवानसि त्वं । राज्यधुरं वहत्यपि परमा अनासक्तिः । कियत्दिनानि यावत् इमानि महाभूतानि पश्यन्तः वयं यास्यामः तत्र यस्मात् न कोऽपि प्रत्यावृत्तः एतावतात्र । आकाशादि भूतानि स्थास्यन्ति अत्र चिरेण । अतः कियत्दिनार्थमेवमाडम्बरं ते । संसारयात्रां निर्वाहयन् निभृतमत्र धर्ममाचर प्रवृत्तिलक्षणं सुखेन । बहुपुण्यफलेनप्राप्तमनुष्यशरीरेण आश्रमधर्माः पालनीयाः । सद्गृहस्थानां समन्वयात्मको धर्मः सुखदायको हि । शिशूनां सुखावहत्वं लोकप्रसिद्धम् । पुत्रो हि त्रायते पुंनामनरकात् । पुत्रपौत्रप्रपौत्राणां दर्शनात् पितृदेवयोः ऋणपरीशोधनं स्वर्गाप्तिश्च भवतीति शास्त्रोक्तिः ।

शुकः- ब्रह्मचर्येण मोक्षस्य सम्भवश्चेत् तत् तु नंपुसकानां सुलभः स्यात् । गृहस्थाश्रमो मोक्षस्य हेतुश्चेत् सपूर्णजगत् मुक्तं भवेत् । एवं वानप्रस्थिनां सन्यासिनां चेत् मृगाः दरिद्रा अपि मुक्ताः भवेयुः परन्तु तन्न दृश्यते । पुत्रात् स्वर्गाप्तिः चेत् शूकरगर्द्धभानामपि तदपि स्यात् । पुत्र-पौत्रप्रपौत्रान् गृध्रा अपि पश्यन्ति जीवने दीर्घजीवित्वात् । परन्तु एतावतापि न ज्ञायते कस्मात् गृध्राः मुक्ताः याताः पितः । धर्माचार्य तुभ्यं किं वा वाच्यं स्यात् मे अस्मिन्

कार्याकार्यविषये । परन्तु नायं संसारः सुखाय इति प्रत्यक्षमनुभूत मे । अत्र दुःखेन सर्वथा युक्तत्वात् सुखं नाम किञ्चिदपि वस्तु न विद्यते च । स्त्रियो बन्धहेतवः इति भवता एव अभिहितं प्राक् । लोहशृंखलाबद्धस्य मुक्तिः स्याद् वा कदाचित् परन्तु रमणीबन्धनान् न मुक्तिः । भवान् तु सूत्रपुराणकारः निखिलानां तमोहन्ता। कथमेवं मोहयसि मां छलवाक्येन ? इहजन्मनि अहं पुत्रस्ते को जाने पूर्वपूर्वजन्मसु कः सम्बन्धः आवयोरासीत् । अतः दुर्लभमनुष्यजन्मनि ब्रह्मणः परमपदप्राप्त्यैव जन्म-सिद्धिः । कथं निवारयसि मामस्मात् महत् कर्मणः । वैराग्ये संजाते "तदहि एव प्रव्रजेत्" इति वेदानुशासनं वर्त्तते एव । "नास्य उत्क्रान्तिः । इहैव संप्रविलीयते" इत्यवस्था मे प्रापणीया पितः! (पितुर्मौनम्)

वाटिका- दिनानि सहस्व वत्स । पित्रा विरचितश्रीमद्-भागवतस्य विचारं कृत्वा मनसि शान्तिर्भवतु ते भगवतः मुकुन्दस्य दिव्यलीलामाकर्णयतः । अनन्तरं तत्शास्त्रं प्रचारय लोकेषु महत् पुण्याप्तये । वासुदेवस्य प्रसादात् मुक्तिस्ते करामलकीवत् सुलभा स्यादत्रापि ।

"धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः

सद्योहृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्”
श्रद्धया शुश्रूषोरेवं फलं चेत् किं पुनः अर्थंविदः विदुषः
स्वद्विवस्य ।

शुकः- (मौनम्) अम्ब ! भागवतशिक्षां करिष्यामि तावत्
पितुः सकाशात परन्तु बदरीवने । विवाहः न विवाहः
वा परब्रह्मणः पदवीदर्शनं मदोप्सितमेत्र ।
(शुकस्य प्रस्थानम्)

नेपथ्ये—

“निगम कल्पतरोर्गलितं रसं
शुकमुखादमृतद्रवसंयुतम्
पिवत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः, ॥ १ ॥
स्वसुखनिभृतचेतस्तद् व्युदस्तान्य भावोऽ
प्यजितरुचिरलीलाकृष्टसारस्तदीयम्
व्यतनुत कृपया यत् तत्वदीपं पुराणं
तमखिलवृजिनघ्नं व्याससुनुं नमामि ॥ २ ॥
यः स्वानुभावमखिलं श्रुतिसारमेकं
अध्यात्मदीपमतितीर्षतां तमोऽन्धम्
संसारिणां करुणयाह पुराणगुह्यं
तं व्याससुनुमुपयामिगुरुं मुनीनाम् ॥ ३ ॥

—※—

## सप्तमदृश्यम्

(व्यासस्य पुरतः शुकजैमिनीसुमन्तुपैलवैशम्पायना उपविष्टाः व्यासाश्रमे वदरीवने)

व्यासः- पुत्रकाः। पश्यत स्थानमिदं यत्र श्रीकृष्णेन पुत्रार्थं तपांसि तप्तवान्। तत्र दूरे तु कुमारेण बाल्येऽपि शक्तिः क्षिप्ता आसीद् भूमौ। शक्तिं भूमौ निक्षिप्य त्रिलोकीमपि अवमानितवान् कुमारस्तदानीं। तेनोक्तं यत् मत्तः बलवत्तरेण ब्राह्मणभक्तेन विप्रप्रियेण पराक्रमशालिना पुरुषेणैव उद्ग्रहीतव्या शक्तिरियम्। त्रिलोक्याः तिरस्कारेण देवतानां व्यथां विज्ञाय विशुद्धात्मा विष्णुः सव्ये नैव पाणिना शक्तिं कम्पयित्वा समुद्धर्तुं समर्थोऽपि स्कन्दं न तिरस्कृतवान्। तत्रस्थितं प्रह्लादं सोऽप्युक्तवानेवं यत् वत्स प्रह्लाद। पश्य कुमारस्य विक्रमं बाल्येऽपि। इतरैरचिन्तितमिदं कर्म। कुमारविक्रममसहमानः प्रह्लादः तदुद्धरणे यतमानः मूर्छितोऽभूत्। एवं वद्रिभूमेः पदेपदे पौराणिकी कथा अन्विता एव।

शिष्याः- भगवन्! भवत् कृपया कृतार्था वयं तेजोयशोलाभात्। तथाप्यनुग्रहं कामयमाना वयमिदानीम्।

व्यासः- ब्रूहि किमनुग्रहः काङ्क्षितः वः?

शिष्याः- शुकदेवेन सह वयं चत्वारः सुमन्तुजैमिनीपैलवैशम्पायना एव भवतः शिष्याः। अस्मासु पञ्चस्वेव भवत्शिक्षा प्रतिष्ठिता सीमिता च स्यादित्येव नः प्रार्थना।

व्यासः- (चापल्यात् विहस्य) शिष्याः! शुश्रूषवे ब्राह्मणाय वेदः सर्दार्थः। यूयं बहुलीभूत्वा वेदानां विस्तारं कुरुत पुराणानां प्रचारमपि। परोक्षा विना शिष्येभ्यः विद्या न दातव्या। अनुचिते भयवर्त्मनि शिष्याः न नेयाः युस्माभिः। यथामति यथापाठं तथा विद्या तथा फलम्। अधर्मेण कृताः प्रश्नाः उत्तराश्च कर्त्तारं नाशयन्ति समये। पेलः ऋग्वेदस्य जैमिनः सामवेदस्य वैशम्पायनः ययुर्वेदस्यः सुमन्तुः अथर्ववेदस्य प्रचारकः स्यात्।

शिष्याः- स्वामिपाद! अनुन, शैलादस्मान् महीं गत्वा बहुधाकृतानां वेदानां प्रचाराय लोकालयं गन्तुकामाः वयमनुमताश्चेत्।

व्यासः- पुत्रकाः! "अनाम्नायमला वेदाः ब्राह्मणस्याव्रतं मलं" इति मनसि कृत्वा पृथिवीं देवलोकं वा यथेष्टं गम्यतां यदि रोचते। परन्तु अप्रमादः स्याद् सर्वत्र। यतः वेदः छलप्रचुरः कूटबहुलश्च वर्त्तते। गृहस्थाश्रमं प्रविश्य अग्निहोत्रसोमयागादिकं कृत्वा कारयित्वा च द्विजातीनां तैः पूजिताः सुखेन तिष्ठत। "सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु"

(व्यासं परिक्रम्य शुकं हित्वा पैलादीनां गमनं । व्यासस्य ध्याने लयः । शुकदेवस्य बहिर्विचरणं । इत्यन्तरे नारदस्यागमनम् ।)

—*—

## अष्टमदृश्यम्

(हिमाद्रि शिखरे विचरति शुकदेवः)

शुकः-(स्वं) सत्यमुक्तं नारदेन । क्षयान्ता एव सर्वे निचयाः तथैव समुच्छ्रयाः पतन्नान्ताः । अत्र संयोगाः अपि विप्रयोगान्ताः मरणान्तमेव जीवितं । क्वास्ते अन्तः पिपासायाः । योगं ऋते नहि परमागतिः । अतः योगेन परमपदं प्राप्स्यामि । सूर्यसदने देहं हित्वा तस्य दुःसहतेजसु प्रवेक्ष्यामि सर्वभूतेषु च । मद्योगवीर्यं सर्वे पश्यन्त्वद्य । महाभागाय नारदाय मुनये मत्पित्रे च भूयो नमोऽस्तु । (शुकस्य समाधौ आवेश ।)

इन्द्रः- अहो व्यासपुत्रः योगेन निरुद्धचित्तः समाधिमाविष्टः । ब्रह्मणः अविनाशीपदं कामयमानः सन्यस्तकर्मायं संसारस्य सुखमभुक्त्वापि । वैराग्यमस्य परीक्षणीयं रम्भायाः प्रेरणेन । (रम्भां स्मरति । तस्याः प्रवेशः । प्रणमति) रम्भे ! शुकदेवः हिमाद्रौ तपस्यारतः । तस्य अन्यथावृत्तिः आनेतव्या ते । मधुमदनौ प्रेषयामि सत्वरं त्वत्सहायार्थं । याहि ।

(शुकस्य तपःस्थले सहसा वसन्ताविर्भावात् द्रुमेषु लतासु च पुष्पाणां प्रकाशः । वनभूमौ कोकिलध्वनिः मलयसमीरणेन सह । रम्भायाः प्रवेशः)

रम्भा- (ध्याननिश्चलं शुकमालोक्य) (स्व) मदनान्तक इव दुष्प्रधर्षोऽयं मदनेन । वृथाप्रयासः बिडौजसः । भवतु तावत् नृत्यगीतेन यत्नं करिष्यामि ।

(सहसा कन्दर्पेन बाणप्रयोगात् शुकस्य नेत्रोन्मीलनं । रम्भां वीक्ष्य)

शुकः- कस्मादागतेयं रमणी । वनभूमिः वसन्तशोभांधारयति पुष्पितद्रुमैः कोकिलध्वनिभिश्च । देवाङ्गना वनदेवी वा कथं नृत्यगानरतेयम् ?

रम्भा- मुने प्रणमामि तुभ्यम् ।

शुकः- का त्वं कथमागतात्र ?

रम्भा- रम्भाहं । सुरसुन्दरी त्वत्संङ्गं कामयमानात्रागता । कुमार ! तरुणेऽपि वयसि कथं योगाभ्यासस्ते तरुणीसंङ्गं विहाय । वृणाम्यहं त्वाम् । मया सह क्रिडां विधेहि । दुर्लभं यौवनश्चायं प्राप्य नारीस्तनाभ्यामक्रीडतः जीवनं व्यर्थमेव । उक्तं च—

"पीनस्तनी चन्दनचर्च्चिताङ्गी विलोलनेत्रातरुणी सुशीला नालिङ्गिता प्रेमभरेण येन वृथागतं तस्य नरस्य जीवनम्"

शुकः- (स्वं) देवेन्द्रेण प्रेरिता भवेत् वा तपोविघ्नार्थं । नारायणं स्मरन्- रम्भे ! न तथा । भगवति अभक्तस्यैव जीवनं व्यर्थम् । शृणु–

"अचिन्त्यरूपो भगवन्निरञ्जनो विश्वम्भरो ज्योतिर्मयश्चिदात्मा
न भावितो येन हृदि क्षणं वा वृथा गतं तस्य नरस्य जीवनम् ।"

रम्भा- कुमार ! बुद्धिविकृतिः त्वयि दृश्यते मे–

"कामातुरा पूर्णशशाङ्कवक्त्रा बिम्बाधराकामलतेव गौरी
नालिङ्गिता स्वे हृदये भुजाभ्यां वृथागतं तस्य नरस्य जीवनम्
ताम्बुलरागा कुसुमप्रकीर्णा सुगन्धितैलेन सुवासितायाः
नामर्दितौगृह्य कुचौ निशायां वृथागतं तस्य नरस्य जीवनम् ।"

नहि । नहि ।

शुकः- "नारायणः पङ्कजलोचनः प्रभुः केयूरहारैः परिशोभमानः
भक्त्यायुतो येन सुपूजितो नहि वृथागतं तस्य नरस्य जीवनम् ।
श्रीवत्सलक्ष्मीकृतहृत्प्रदेशः तार्क्ष्यध्वजश्चक्रधरः परात्मा
न सेवितो येन क्षणं मुकुन्दः वृथागतं तस्य नरस्य जीवितम्
विश्वम्भरो ज्ञानमयः परेशो जगन्मयोऽनन्त गुणप्रकाशः
आराध्य येनैव धृतो न योगे वृथागतं तस्य नरस्य जीवनम्"

(नारायणगुणकीर्त्तनात् सहसा भावावेशात् समाधिः । निरस्ता रम्भा तं परिक्रम्य भक्त्या भयाच्च प्रत्यावर्त्तते स्वर्गाय)

—*—

## नवमदृश्यम्

(शुकदेवस्य योगेन ऊद्ध्र्वगमनं । देवैः पुष्पवृष्टिः । मुनयोऽप्सरसः पश्यन्ति । )

मुनयः- अहो व्यासनन्दनोऽयं शुकः क्रमयोगेन आत्मनः साक्षात्कारात् परमानन्देन हसन्निव ऊद्ध्र्वं गच्छति वैनतेय इव।

अप्सरसः- (विस्मिताः) कोऽयं तपःसिद्धः आकाशे विक्रामति अधःकायः ऊद्ध्र्ववक्त्रः नेत्रमकृष्य सर्वेषाम् स्येन एव स्वनेन दिशः आपूरयन् । अहो वेदाभ्यासपरायणस्य अस्य ब्राह्मणस्य महती एकाग्रता । पितृसेवया उत्तमा बुद्धिः संजाता अस्य ।

शुकदेवः- (पितृशब्दं श्रुत्वा दिशः पश्यति) अप्सरसः । शुक इति क्रोशमानः पिता मे अनुगतश्चेत् यूयं दिशः सरित्पर्वतकाननानि सर्वे च मत्कृते तस्मै प्रतिवचनं प्रयच्छत । (पुनरुद्ध्र्वंगतिः एकाग्रतया)

मुनयः- अहो पर्वतशृङ्गमपि द्विधाकृत्य अदृश्यतां गतः व्यासपुत्रः । साधु शुकदेव साधु साधु चरितं ते । अहो शुन्याकारावृत्तिरस्य । स्वर्गङ्गायां स्नानरताः देवाङ्गनाः विवसनाः अपि न लज्जन्ते अस्मात् । ब्रह्मभूतोऽयं नूनं ब्रह्मभूतोऽयं संजातः ।

"यं प्रव्रजन्तमनपेतमपेतकृत्यं
द्वैपायनो विरहकातर आजुहाव

पुत्रेति तन्मयतया तरवोऽभिनेदुः
तं सर्वभूतहृदयं मुनिमानतोऽस्मि ।"

व्यासः- (ध्यानात् व्युत्थाय) अहो शुकः परमपदं विशति पर्वतावपि विभिद्य ऊर्ध्वगत्या । सत्वरं गमिष्यामि तत्र तन्निरोधाय महायोगगत्या । (तत्र रुदतः तस्य प्रवेशः । मुनीनामागमनम् )

मुनयः- पराशरनन्दन व्यास । अलौकिकमाचरितं तव पुत्रेण पश्यतां नः ।

व्यासः- (रोदनेन) शुक शुक ।

प्रकृतिः- (शुकेनाविष्टा) भोः ।

अप्सरसः- शुकतातोऽयं विद्यतेऽत्र । किं कुर्मः ? आत्मगोपनं वस्त्रपरिधानं च सत्वरं करणीयं नः ।

व्यासः- अहो मुक्तता शुकस्य । विवाससोऽपि एताः युवतयः तस्मात् विगतलज्जाः संजाताः । परन्तु मत्तः लज्जन्ते एव इदानीं । अहो मे विषयित्वं । अलं लज्जितोऽहम् । (पुनः शोकं करोति शुक शुक इति वदन् । शङ्करस्य देवैः सह प्रवेशः ।)

महादेवः- ब्रह्मर्षे ! तव तपस्यानुरूपं पुत्रः प्रदत्तो मया । कथं तमनुशोचसि ? स तु परमां गतिमाप्तवान् । यावत् पर्वतसरित्सागराः स्थास्यन्ति तावत् सपुत्रस्य ते

कीर्तयः स्थास्यन्त्येव । मत् प्रसादात् पुत्रस्य छाया सदा सर्वत्र नेत्रपथे स्थास्यति ते दर्शनकामस्य । ब्रह्मन् ! शोकं परिहर अधुना । लोकानां कल्याणाय "परोपकारः पुण्याय पापाय परपीडनं" इति तत्वं प्रचारय स्वस्याचरणेन । (शिवस्य अन्तर्द्धानं । व्यासस्य आश्रम-प्रत्यावर्त्तनम्)

—*—

# तृतीयांकः

## प्रथमदृश्यम्

(वनभूमौ कुन्त्या सह पाण्डवानां स्वाध्यायकाले व्यासस्य आगमनम् । सर्वेषां प्रणाम उत्थानात् सत्कारश्च आसनादि प्रदानात्)

व्यासः- कुमाराः ! विदितं मया युस्मासु धार्तराष्ट्रैः पातितमिदं व्यसनं विवासनं च । मा विषादेन । सर्वं भात्रीसुखाय वः घटितं । तुल्यस्नेहेऽपि मे पाण्डवधार्तराष्ट्रेषु विपन्नेषु युस्मासु संप्रति मे महती प्रीतिः । तस्मात् हितं चिकीर्षुः वः इहागतः । अदूरे वनोपकण्ठं स्वास्थ्यप्रदं रमणीयं नगरं वर्त्तते एकचक्राख्यं । तत्र प्रतिच्छन्नाः वसत जनन्या सह मदागमनं यावत् ।

कुन्ती- (सम्मुखं आगत्य पुनः प्रणामात् क्रन्दति मौनं दण्डायमाना)

व्यासः– जीवत्पुत्रिके वधू । सुतस्तेऽयं युधिष्ठिरः समुद्रमेखलां धरणीं धर्मेण जित्वा भीमार्जुनबलाद् निःसंशयं भोक्ष्यते एव राजसूयादिकं करिष्यमाणः माद्रीपुत्राभ्यां महारथाभ्यां सह । तस्मात् दुःखं मा कुरु । समयं प्रतीक्षस्व ।

(व्यासस्य प्रस्थानं । सर्वेषां प्रणामः)

—*—

## द्वितीयदृश्यम्

(द्रुपदधृष्टद्युम्नकुन्तीपाण्डवानां विचारः द्रौपदीविवाह-विषये। व्यासस्यागमनं । सर्वेषां प्रणामः)

द्रुपदः– महात्मन् ! रमण्याः बहुपुरुषाणां धर्मपत्नीत्वं कथं स्यात् साङ्कर्यदोषं परिहृत्य ? लोकवेदविरुद्धत्वात् एष अधर्म एव ।

धृष्टद्युम्नः– भगवन् ! ज्येष्ठभ्रातुः सदाचारे सति कथं भ्रातृ-वध्वाः समागमः स्यात् ?

युधिष्ठिरः– प्रभो ! माता गुरुः सर्वेषां । गुरुजनानामाज्ञा धर्म्या एव । भैक्ष्यवत् पाञ्चालीं भोक्तुं जनन्याः निर्देशः । ततः पञ्चानां विवाहः द्रौपद्या सह धर्मसम्मत इति मे मतिः । प्रागपि गौतमगोत्रीया कन्या जटिला कुण्डु-पुत्री वार्क्षी अपि यथाक्रमं ऋषिसप्तकं प्रचेतसांदशकं च युगपत् विवाहं कृतवती ।

कुन्ती- मुने ! तदेव मे निर्देश आसीत् अज्ञानात् । असत्यभाषणात् भीताहमिदानीम् ।

व्यासः- भद्रे ! मा भयेन । त्वामसत्यं मा स्पृशेत् । (द्रुपदं वीक्ष्य) त्वां निभृतं कथयिष्यामि रहस्यं यद्विद्यते अस्मिन् विवाहे । (कक्षान्तरं गच्छतः)

व्यासः- महाराज द्रुपद ! एते पाण्डवा पूर्वं इन्द्रा अपि रुद्रकोपात् मनुष्यरूपेण संजाताः । इयं द्रौपदी तु स्वर्गलक्ष्मीः आसीत् तेषां पत्नीत्वेन नियता रुद्राज्ञया । देवतानां सहयोगं विना कथं ते यज्ञात् याज्ञसेन्याः सम्भवः स्यात् । द्रौपदी पूर्वं मुनिकन्यापि भूत्वा महादेवं प्रसादितवती । सर्वगुणसम्पन्नपतिं देहि इति वाक्यस्य पञ्चकृत्वः उच्चारणात् तस्याः पञ्चपतयः भविष्यन्ति जन्मान्तरे इति उक्तं शिवेन । सा मुनिकन्या एव द्रौपदीरूपेण जाता । शम्भोः वरप्रभावत् पञ्चपतयः भविष्यन्त्येवास्याः । अत्र न सन्देहः ईशवाक्यस्य अमोघत्वात् । दिव्यदृष्टिं ददामि ते । स्वयमपि त्वं पश्य पाण्डुपुत्राणां द्रौपद्याश्च पूर्वरूपम् । (मन्त्रंपठन्चक्षुः स्पृशति द्रुपदस्य)

द्रुपदः- (स्वं) अहो मनोहरा दृश्यन्ते एव एते पाण्डवाः पूर्वतनेन्द्ररूपपरिग्रहात् । द्रौपद्याः स्वर्लक्ष्मीरूपं च अतीव विस्मयकरं । भवितव्यं तथैव स्यात् । (प्रकाशम्) महर्षे ! भवत एवं शक्तिमत्त्वं नैव विस्मयाय मे । लोकान्तर-

सर्जनशक्तिरपि त्वयि विद्यते इति मे विश्वासः । भवदाज्ञया विवाहः पञ्चभिः पाण्डुपुत्रैः सह अवश्यं करिष्यामि पुत्राणामसम्मतौ अपि ।

(पाण्डवानां प्रस्थानम् व्यासस्य च)

—*—

## तृतीयदृश्यम्

(द्वैतवने युधिष्ठिरादीनां उक्तिप्रत्युक्तिः)

द्रौपदी- धर्मराज ! भवतां सुखाहीनां दुःखमानीय मोदते एव दुर्योधनः । भीमार्जुनादीनां दुःखमालोक्यापि राजभोगभ्रष्टस्यापि ते हृदये न रोषः । द्रुपदराजकुमार्या, महाराजपाण्डोः पुत्रवध्वाः मे दुर्दशां दृष्ट्वापि व्यथा न जायते मनसि वा कथम् ? चेतसि ते मोहस्य उत्पादयित्रे वेधसे मे नमोवचांसि सन्तु भूयसा त्वदुद्धरणाय । धर्मवादिनस्ते धर्मः कथं रक्षति त्वां रक्षितोऽपि ?

भीमः- राजन् ! भवतः असावधानतया अस्माकं इयं दुर्गतिः तवानुशासनादेव अस्माकं एवं वनचर्या अधुना । ब्राह्मणानां दयालुता क्षमाशीलता च त्वयि दृश्यते क्षत्रियकुलसम्भूतेऽपि । बुद्धिं ते विनष्टां शङ्केऽहम् । अन्यथा शक्तियुक्तत्वेऽपि कथं युद्धेऽप्रवृत्तिः । राजापि दुष्टानां शासने कथमप्रवृत्तिः । वासुदेवार्जुनयोः साहचर्ये सति कौरवाः किं करिष्यन्ति नः ।

युधिष्ठिरः- (कियत्क्षणं विचिन्त्य) भ्रातः ! आदौ वनवासं स्वीकृत्य कथं पीडयसि मामित्थमिदानीम् कटूक्तिभिः । बलदर्पितस्य ते चापल्यस्य परिणाम एवैतत् दुर्वचनम् । वृकोदर ! भीष्मद्रोणादयः देवैरपि अजेयः । अभेद्य-कवचावृतस्य कर्णस्य को वा प्रतिद्वन्द्वी स्यात् द्वैरथसमरे । तस्य हस्तलाघवं दिव्यास्त्रज्ञानं स्मृत्वा निद्रामपि जहाम्यहं निशायाम् । अरे । न वृथास्फालनेन । समयं प्रतीक्षस्व । (भीमस्य आशङ्का मौनं च व्यासस्य प्रवेशः)

व्यासः- धर्मराज ! ध्यानेन ते मनोगतं भयं विज्ञाय अत्रागतः प्रपन्नस्य ते क्षेमं चिकीर्षुः । भीष्मादीनां कृते ते भयं जानाम्यहं । मत्तः प्रतिस्मृतिविद्यां गृहीत्वा अर्जुनाय प्रयच्छ । स तु चिरन्तनसखा नरः पुराणऋषेः नारायणस्य । एतद्विद्यान्वितः स तपसा देवतानां दर्शनं प्राप्य महेन्द्रात् दिव्यास्त्राणां ज्ञाता भविष्यति । स एव जेता भीष्मादीनां समरे समये तत् प्रभावात् ।

(आचमनान्ते व्यासः कथयति कर्णे युधिष्ठिरस्य)

युधिष्ठिरः- महर्षे ! इत्थं करुणा त्वय्येव युज्यते लोके ।

व्यासः- राजन् ! अधुना वनान्तरं याहि । एकत्र चिरवासोऽपि न प्रीतये वः । भवतामत्र दीर्घवासः तापसानां तपोविघ्नाय एव । भवद्भिः पशवोऽत्र क्षयं नीताः । लतागुल्मादीनां

संक्षयोऽपि संजातः। अतः नरेश्वर ! स्थानान्तरं गत्वा अर्जुनं प्रेरय तपसे प्रतिस्मृतिं विद्यां प्रदाय। एतेन वः कल्याणं पश्यामि । (अन्तर्द्धानम्)

—*—

## चतुर्थदृश्यम्

(हस्तिनाराजप्रासादस्य धृतराष्ट्रभवनम् । धृतराष्ट्रः शोकमग्नः । पार्श्वे संजय उपदिष्टः)

धृतराष्ट्रः- संजय ! बहुशः बोधितोऽपि मद्वाक्यं न स्वीकृतवान् दुर्योधनः । तज्जन्मकाले त्रिकालदर्शिणा व्यासेन तन्नाशाय उपदिष्टोऽहम् । परन्तु पुत्रस्नेहेन अन्धीभूतः तथा अकृत्वा इदानीं सर्वेषां नाशं पश्यामि ।

(व्यासस्य प्रवेशः)

व्यासः- किमधुना शोकेन पश्चात्तापेन वा ? क्षयकालोऽयमुपागतः त्वत्पुत्राणां अन्येषां च महीपालानां । कालस्य प्रभावोऽयमिति मत्वा शोके मनः मा कृथाः । दिदृक्षुश्चेत् चक्षुर्ददामि पश्य पुत्राणां संग्रामम् ।

धृतराष्ट्रः- महर्षे ! ज्ञातिवधं द्रष्टुं नेच्छामि परन्तु भवत् कृपया श्रोतुमिच्छामि समरवृत्तम् ।

व्यासः- राजन् ! एष सञ्जयः युद्धसमाचारं ते कथयिष्यसि । मत्प्रासादात् दिव्यचक्षुषान्वितोऽयं सर्वशो भूत्वा दिवा रात्रौ वा।

वा प्रकटाप्रकटं मनस्थमपि सकलं प्रत्यक्षीकृत्य त्वां ज्ञापयिष्यति । नास्य कथमपि विनाशः स्यात् समरेऽस्मिन् शस्त्रैरस्त्रैर्वा । कुरुपाण्डवानां कीर्त्तिमहमपि प्रथयिष्यामि काले लोकेषु ।

धृतराष्ट्रः- ममपुत्राणां विजयं कथं वा स्यादत्र कृष्णार्जुनभीमेषु तत्र वर्त्तमानेषु ।

व्यासः- देवं अनियम्यं सर्वथा । मा शुचः । यतोधर्म स्ततो जयः । महान् एव नरसंहारो भविष्यत्यत्र । उत्पातास्तथैव सूचयन्ति । उदयास्तमने सूर्यं कबन्धावृतं पश्यामि । कार्त्तिकपूर्णिमायामपि चन्द्रमाः प्रभाहीनः संजातः । फलं महाशूराणां मृत्युः । देवमूर्त्तयः कम्पमानाः दृश्यन्ते । अनाहता अपि दुन्धुभयः शब्दायन्ते । शुकसारसानां ध्वनिः भयङ्करं श्रूयते । दिक्षु दाहो दृश्यते । पर्जन्यः पांशुवर्षो मांसवर्षो च भवति । लोकप्रसिद्धा अरुन्धती तारा वशिष्ठं पृष्ठतः करोति रोहिणीं च पीडयति शनैश्चरः । गोषु खराः प्रजायन्ते वडवा च गोवत्सं प्रसूते । तथैव शुनी शृगालान् वनद्रुमाः अनार्तवं पुष्पफलं दर्शयन्ति । उग्रावाता विष्वग् वान्ति । रजांसि नोपशाम्यन्ति भूमिरभीक्ष्णं कम्पते । महाराज ! काल एव ते पुत्ररूपेण संजातः । हेयमिमं जातिवधं निवारय' वेदेऽपि वधः न पूज्यते । तस्मात् कथंचन हितं न स्यात् । किं ते राज्येन वा ? पाण्डवाः

राज्यं लभन्तां । कौरवाः शमं गच्छन्तु । एतेन ते कीर्त्तिधर्माः स्थायिनो भविष्यन्ति ।

धृतराष्ट्र- परन्तु नेते पुत्राः ममवश्याः किं करोमि ? महर्षे ! अनिमित्तानि कथितानि भवता । जयलक्षणानि अपि श्रोतुमिच्छामि ते मुखात् ।

व्यासः- तर्हिंश्रुणु । "अनुगा वायवो वान्ति तथाप्राणि वयांसि च
अनुप्लवन्ति मेघाश्च तथैवेन्द्रधनूंषि च ।

राजन् ! अल्पायां महत्यां वा सेनायां योधगणस्य हर्ष एव जयलक्षणं इति मे निश्चयः । परस्परज्ञाः संहृष्टाः व्यवधूताः सुनिश्चिताः सैन्याः अनिवर्त्तिनश्चेत् अल्पशोऽपि महतीं चमूं जयन्ति । परन्तु युद्धस्य दोषः जनसंहारः । तस्मात् युद्धात् उपायेन विजयं श्रेष्ठमाहुः । धृतराष्ट्र ! सावधानं कार्यं कुरु ।

—*—

## पञ्चमदृश्यम्

(कुरुक्षेत्र समराङ्गनम् । धनुः त्यक्त्वा रथात् प्रस्कन्द्य पलायते अश्वत्थामा)

अश्वत्थामा- धिक् धिक् । सर्वमिदं मिथ्या । सत्यं चेत् कथं जीवतः पार्थमाधवौ आग्नेयास्त्रप्रभावात् ।

(दूरादागच्छन्तं व्यासदेवं दृष्ट्वा) अहो नायं जनः स्निग्धमेघसंकाशात् अकल्मषात् वेदव्यासादन्यो भवितुं अर्हति । (दुःखेन प्रणमति) महर्षे कथमस्त्रमिदं मिथ्या संजातम् ? कश्च वा व्यतिक्रमो मे ? किमिदं दैवेच्छा माया वा यत् इमौ कृष्णौ जीवतः । काल एव दूरतिक्रमः मयेऽस्त्रमस्त्रमिदं अन्यथाकर्त्तुं नहि शक्नुवन्ति देवा यक्षोरगा वा का कथा मानुषानाम् । सर्वघाति दारुणं अस्त्रं मया मुक्तमासीत् तथापि मर्त्यधर्मिणौ अपि केशवार्जुनौ कथं नावधीत् ? महामुने । एतत् रहस्यं कथय मां अतिदुःखितम् ।

व्यासः- नहि किञ्चिद् विस्मयो वर्त्ततेऽत्र । अच्युतस्य अजस्य जगत्पतेरवतारः प्राचीनऋषिः नारायणः पुरा हिमाद्रौ दीर्घकालिकेन महता तपसा ईश्वरं प्रसादितवान् । विश्वेश्वरस्य प्रसादेन स तस्मादपि बलवत्तरः संग्रामेऽकैलैरजेयः सं बभूव । स एव पुरातन ऋषिः भगवान् नारायणः श्रीकृष्णरूपेण संजातः देवकार्यार्थं । रुद्रवरेण स अस्त्रैरन्यथा वा अजेयोऽविनाश्य एव । नारायणस्य तपः सम्भूतः नरोऽपि तत्तुल्यशक्तिशाली एव । स एवात्र अर्जुनरूपेण जातः । एतौ महातपस्विनौ विष्णुरूपिणौ ऋषिसत्तमौ युगे युगे धर्ममर्य्यादारक्षणाय सम्भवतः तस्मादवध्यौ एव सर्वथा । अतः विस्मयो न स्यात्

तेऽत्र विषये । त्वमपि पूर्वजन्मनि तपसा शङ्करात् महद्वरान् प्राप्तवानसि । त्वं शिवं विग्रहे पूजितवान् तौ नरनारायणौ तु लिङ्गे पूजितवन्तौ ।

"सर्वभूतभवं ज्ञात्वा लिङ्गमर्चति यः प्रभोः
तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ।"
केशवं रुद्रसम्भवं विद्धि ।

अश्वत्थामा- भगवन् ! गतसन्देहोऽहमधुना । नमामि त्वां भूयसा । (सैन्यानुवीक्ष्य) सैनिकाः यूयं शिविरं प्रत्यागच्छत अहं वनं व्रजामि इति राजानं कथयत । (प्रस्थानम्)

—*—

## षष्ठदृश्यम्

(गङ्गातटे मुनीनां मध्ये आसीनं द्रौणिं कृष्णार्जुनयुधिष्ठिरानुयातस्य धनुर्बाणकरस्य भीमसेनस्य आह्वानम्)

भीमः- गुरुपुत्र क्रूर अश्वत्थामन् । कथमत्र पलायितः रणभूमिं विहाय सुप्तानां नाशानन्तरम् । तिष्ठ तिष्ठ । पुत्रहत्यायाः प्रतिशोधं करिष्यमाणोऽहम् इदानीम् ।

अश्वत्थामा- (तान् धनुर्बाणहस्तान् दृष्ट्वा भयेन व्यथया च दिव्यास्त्रं चिन्तयित्वा ऐषिकमेकं गृहीत्वा मन्त्रपूतं कृत्वा

प्रेषयामास कथयन्) अपाण्डवां पृथिवीं कुरु ।
(इषीकायामपि प्रलयाग्नेः प्रकाशः)

कृष्णः- फाल्गुने ! भ्रातॄणां आत्मनश्च परित्राणाय ब्रह्मास्त्रं त्वमपि विसृज ।

अर्जुनः- (रथादवतीर्य गुरुं नमस्कृत्य ब्रह्मास्त्रमुत्सृजति एवं वदन्) आचार्यपुत्रस्य कल्याणं भवतु। तत्क्षिप्तस्य अस्त्रस्य तु शान्तिर्भवतु ।(अग्नेराविर्भावः । महानुत्पाताः दिक्षु । दिशः ज्वालाभिः व्याप्ता । अस्त्रयोः मध्ये नारदव्यासयोः आविर्भावः लोकहिताय ।)

व्यासः- वीरौ ! पूर्वमपि महान्तः अस्त्रविदः महारथाः आसन् पृथीव्याम् । परन्तु न केनापि मनुष्येषु एतदस्त्रं प्रयुक्तम् । कथं युवयोः लोकनाशाय इत्थं साहसं ।

अर्जुनः- ऋषिप्रवरौ ! अस्त्रप्रतीकारार्थमेव अस्त्रस्य प्रयोगो मे । संहृते तस्मिन् वयं नष्टाः न किम् ? भवन्तौ ब्रूतम् किं करिष्यामः ? (इत्युक्त्वा अस्त्रं प्रतिसंहरति)

अश्वत्थामा- (प्रतिसंहारे अकृतकार्यः) भीमभयात् अस्त्रं प्रहृतं अजितेन्द्रियेन मया प्राणरक्षार्थम् । अनेन अधर्मोऽपि कृतः दुर्योधनं जिघांसुना । प्रतिसंहाराय न मे शक्तिः। मुने ! वह्नितेजसा अनुमन्त्रितं अस्त्रमिदं अपाण्डवाय

विसृष्टन् नूनं पाण्डुसुतान् जीवितात् भ्रंशयिष्यति ।
रोषाविष्टेन चेतसा पार्थानां वधाय अस्त्रं उत्सृजता
मया महत्पापं कृतमेव ।

व्यासः- तात ! अर्जुनोऽपिब्रह्मास्त्रवित् । परन्तु तेन तव विनाशः मनसापि न चिन्तितः समरे । पश्य । अस्त्रप्रतिशमनार्थमेव उत्सृष्टं तदस्त्रमपि प्रतिसंहृतवान् मद्वचनात् । क्षात्रधर्मात् अविचलितोऽसौ सत्पुरुष एव । तथापि त्वं तस्य वधं चिकीर्षुः । ब्रह्मास्त्रं परमास्त्रेण यत्र वध्यते द्वादशवर्षाणि यावत् तद्देशे पर्जन्यः नाभिवर्षति । तदर्थं लोकानां कल्याणाय एव तवास्त्रं न निहन्ति समर्थोऽपि । अतस्त्वमपि पाण्डवान् राष्ट्रं च रक्षितुमर्हसि । तस्मात् सत्वरं संहर दिव्यास्त्रमिदं । पार्थाः निरामयाः सन्तु । तवापि अरोषः स्यात् । तव शिरस्थमणि प्रदानेन पाण्डवानां शान्तिं विधेहि । एतेन न विपन्नोऽसि त्वम् ।

अश्वत्थामा- महात्मन् ! अद्भुतप्रभावोऽस्य मणेः । एतस्य धारणात् शस्त्रव्याधिक्षुधादेवराक्षसानां बाधा न स्यात् । तस्मात् अदेयो मे । परन्तु भगवतस्ते वचनात् मणिं त्यक्त्वा तिष्ठाम्यहमत्र । परन्तु उद्यतमस्त्रं संहर्तुं अशक्तोऽहम् । अमोघमिदमस्त्रं पाण्डवेयानां गर्भेषु पतिष्यति

एव । अतः गर्भेषु विसृजामि एतदस्त्रं । महामुने ! भगवतः वाक्यं न करिष्यामि इति न ।

व्यासः– एवमस्तु । अन्या बुद्धिर्भूयो न कार्या पार्थानां संहाराय पाण्डवेयानां गर्भेषु अस्त्रं विसृज्य त्वं विरमस्व ।

कृष्णः– (कुपितः) त्वया मारितोऽपि गर्भो मृतो जातो भूयः दीर्घायुराप्नुय पाण्डवेयानां वंशप्रवर्तकः भविष्यति । परन्तु त्वां कापुरुषं मुहुः पापकर्माणं बालहन्तारं इति मनीषिणः कथयिष्यन्ति । पापस्य कर्मणः फलमाप्नुहि । एकाकिना मनुष्यसङ्गरहितेन त्वया त्रीणि सहस्रवर्षाणि निर्जनप्रदेशे विचरितव्यम् । न ते स्थितिः स्यात् जनेषु । पापात्मन् ! सर्वव्याधिसमन्वितः पूयशोणितगन्धो दुर्ग-कान्तारसंश्रयः पृथिव्यां विचरिष्यसि । शस्त्राग्निदग्धं शिशुं अहमेव जीवयिष्यामि । नराधम । पश्य मे सत्यतपसोः वीर्यम् ।

व्यासः- द्रोणकुमार । अस्मान् अनादृत्य त्वया दारुणं कर्म कृतम् । ब्राह्मणोऽपि आचारभ्रंशात् क्षात्रधर्मं स्वीकृतवानसि त्वम् । तस्मात् भगवता कृष्णेन यदुक्तं तत्सर्वं त्वदर्थं निःसंशयं भावि एव ।

अश्वत्थामा- ब्रह्मर्षे ! परन्तु मनुष्येषु केवलं भवता सममेव स्थास्यामि । अन्यत्र भगवान् पुरुषोत्तमः सत्यवागस्तु ।

व्यासः- तर्हि त्वया बद्रिकारण्यावस्थानात् आश्रमे साक्षात् करणीयोऽहम् ।

—*—

## सप्तमदृश्यम्

(गङ्गातीरे आचमनं करोति व्यासदेवः)

व्यास - अहो पाण्डवान् शप्तुकामास्ति मनस्विनी पुत्रशोकार्त्ता गान्धारी। रक्षणीयास्ते पाण्डवाः। (योगबलेन गान्धारी भवने प्रवेशः यत्र श्रीकृष्णपाण्डवाः आसन्)

गान्धारी- (स्वं) युधिष्ठिरादयः अत्रागताः हतशत्रवः शप्स्यामि इमान् शापेन पुत्रशोकस्य निवृत्त्यर्थम् ।

व्यासः- गान्धारि । शमं आप्नुहि । पाण्डवेषु कोपः न कार्यः । एतद्वचः यद् वक्तुकामासि तन्निगृह्यतां मद्वचनात् । पूर्वमपि दुर्योधनाय त्वया आशिषं दत्तमसकृत् "यतो धर्म स्ततो जयः"। तदेव घटितमधुना। पुनः कस्मात् क्रोधः ? त्वं सत्यवादिनी सर्वेषां हितकारिणी क्षमाशीला च असि । धर्मज्ञे ! अधर्मं जहिहि । "यतो धर्म स्ततो जयः" इति प्राग्वचस्ते स्मृत्वा कोपं संयच्छ । मद्दत्तेन वरेण ते दृष्टिः दिव्या भवतु ।

गान्धारी- भगवन् ! नाभ्यसूयामि पाण्डवान् । तेषां नाशमपि नेच्छामि । पुत्रशोकात् मनो बलान्मे विह्वलतीव । कुन्त्या इव मयापि एते रक्षणीया भवतः इव धृतराष्ट्रे-नापि । दुर्योधनशकुनिकर्णदुःशासनानां अपराधानां फलमेतन्नरसंहारः । पाण्डवाः निरपराधाः । परन्तु अधर्मेण मारितो मे पुत्रः दुर्योधनः भीमेन । तस्मादपि क्रोधः जायते । एकोऽपि पुत्रः न रक्षितस्तेन मे । अनेन मधुसूदनेन शक्तावपि कुरूणां नाश उपेक्षितः । तत्फलं गृह्णातु सः । स्वकुटुम्बान् वधिष्यत्यसौ इतः षट्त्रिंश-दब्दानन्तरम् । हतज्ञातिर्हतामात्यः हतपुत्रः वनेचरः अनाथवत् अविज्ञातः लोकेषु अनभिलक्षितः कुत्सितेन उपायेन निधनं समवाप्स्यति एष कृष्णः ! भरतस्त्रिय इव तस्यापि स्त्रियः निहतज्ञातिबान्धवाः हतपुत्राः भविष्यन्ति

कृष्णः- (विहसन्) क्षत्रिये ! कृतमेव भूयः कृतं त्वया । एतत् इत्थमेव भावि इति ज्ञातं मया । वृष्णिचक्रस्य मत्तोऽन्यत् कः संहर्ता स्याद् वा । वृष्णयः दैवादेव विनश्यन्ति मिथः प्रहारैः । (पाण्डवानां भयं । अन्येषां मौनं युधिष्ठिरस्य शोकः)

व्यासः- धर्मराज ! नहि शोकस्य कालोऽयम् । स्वधर्मे स्थित्वा धृतराष्ट्रस्य सम्मत्या प्रजानां पालनं कुरु । तदेव कर्त्तव्यं ते सम्प्रति । अनन्तरं अश्वमेधेन हरिं यजस्व । अर्जुन !

पौत्रस्ते वासुदेवस्य प्रसादात् ममाशीर्वादाच्चसागरान्तां महीं पालयिष्यति धर्मतः । न सन्देहोऽत्र । मद्वचनं सत्यं भविष्यत्येव ।

—*—

## अष्टमदृश्यम्

(वनवासिनां कुन्तिगान्धारीधृतराष्ट्राणां दर्शनाय पाण्डवा उपस्थिताः)

युधिष्ठिरः- (धृतराष्ट्रस्य पदं गृहीत्वा) युधिष्ठिरोऽहं भवन्तं अभिवादयामि । (एवम् अन्येऽपि)

धृतराष्ट्रः- वत्स युधिष्ठिर ! चिरं जीव । युस्मत् स्नेहानुबद्धोऽहं मुग्धश्च शालिनतया । आसने उपविश्य फलमूलादिकं सर्वं गृह्णध्वम् । तदेवात्र मे भोजनम् ।

(शतयूपेन सह व्यासस्य प्रवेशः । सर्वेषां सत्कारः)

व्यासः- धृतराष्ट्र ! क्वचित् प्रीणाति मनस्तेऽत्र वनवासे । अपि वर्द्धते तपस्ते ? युवां त्यक्तशोको किमु इत्यन्तरे ? मत्पुत्रत्वात् भ्राता ते विदुरः बुद्धिमत्तमः शापभ्रष्ट धर्मं यं विदुः इदानीं धर्मराजस्य शरीरे प्रविष्टः देहं हित्वा । भारत ! हिताय ते ममागमनमत्र । ब्रूहि किं प्रार्थितं ते । (प्रार्थनायां विलम्बमालोक्य) जानाम्यहं

ते मनोगतं। गान्धारीकुन्तीद्रौपदीभिः सह तवापि मनः अद्यापि न मुञ्चति पुत्रशोकं । अतः महर्षिभिरपि अकृत-पूर्वं यत् कार्यं तदेव दर्शयिष्यामि अद्य युस्मत्प्रीतये । इमे देवगन्धर्वाः इमे च ऋषयः पश्यन्तु सर्वे चिरसम्भृतं वीर्यं मत्तपसः। उच्यतां किमभिलाषम्ः। वरं दातुं प्रवणोऽहम् ।

धृतराष्ट्रः- महर्षे ! भवतोऽनुग्रहं विज्ञाय सफलं मन्ये मद्-जीवितम् । दर्शनात् एव भवतां पूतोऽहं। परलोकादपि भयं मे न विद्यते इदानीं तवसान्निध्यात् । परन्तु पुत्रशोकेन संतप्तोऽस्मि इत्येव सत्यं ।

गान्धारी- वयं सर्वेऽपि शोकविलष्टाः। महामुने ! सकृत् दर्शया-स्मान् परलोकगतपुत्रान् ।

व्यासः- रात्रावेव दर्शयिष्यामि मृतान् वः । भद्रे कुन्ति ! कर्णस्य कृते चिन्ता ते दूरीभवतु। मनुष्यधर्मः देवधर्मेण न दुष्यति । देवाः अणिमादिसिद्धेः शरीराणि आविश्य संकल्पेन वचनेन स्पर्शेणापि पुत्रान् जनयितुं क्षमाः । न ते दोषः तत्र कर्णजन्मनि । तद्विरहात् खिद्य-मानासि । त्वमपि द्रक्ष्यसि तमद्य। सर्वैः गङ्गातटं आगन्तव्यम् ।

व्यासः- धृतराष्ट्र दिव्यदृष्टिं ददामि ते। पश्य स्वपुत्रान् दिवंगतान् । भूयः शोकः न कर्त्तव्यः। (सर्वेषां गमनं गङ्गातटं। गङ्गा-जले प्रविश्य व्यासः ध्यानान्ते आवाहयति)

अत्रागच्छन्तु ये याताः कुरुक्षेत्रं महाहवे
स्वरूपेण स्वसैन्यैश्च यथा भूषणवाहनाः ।

(सहसा कौरवकर्णादीनामाविर्भावः । वीरवैराणां मिलनं आलापश्च आप्रभातम् ।)

धृतराष्ट्रः- महामुने ! भवत् प्रसादात् कृतार्थाः वयम् । अद्य मरणं न मे दुःखाय स्यात्

व्यासः- भारत ! भूयो मा विषादेन—

"मातृपितृसहस्राणि पुत्रदारशतानि च
ससारेष्वनुभूतानि यान्ति यास्यन्ति चापरे
हर्षस्थानसहस्राणि भयस्थानशतानि च
दिवसे दिवसे मूढमाविशन्ति न पण्डितम्

न जातु कामात् न भयान्नलोभात्
धर्मं त्यजेत् जीवितस्यापिहेतोः
नित्यः धर्मः सुखदुःखे त्वनित्ये
जीवोनित्यः हेतुरस्य त्वनित्यः ।

—*—

## नवमदृश्यम्

(आश्रमे उपविष्टः व्यासः। दुःखितस्य अर्जुनस्य प्रवेशः)

अर्जुनः- मुने ! अर्जुनोऽहं प्रणतोऽस्मि ।

व्यासः- कल्याणमस्तु । आसनं गृहाण । धनञ्जय । कथं श्रीहीनो दृश्यते । नखादिभिरशुद्धजलस्नातोऽसि किमु ? रजस्वलास्त्रीसंगतो वा ब्रह्मघातो पराजितो वा संजातः यतः एवं मलिनता ।

अर्जुनः- (शोकात्) भगवन् ! पङ्कजलोचनः मेघवपुः कृष्णः रामेण सह दिवंगतः! महाबलिनः वार्ष्णेयाः ऐरकैः तृणैरपि मृताः मिथोऽभिघातैः । पञ्चनदालयैः तस्करैः ममापि पश्यतः वृष्णिदाराः सहस्रशोऽपहृताश्च । तत्र बलहीनत्वात् अस्त्रज्ञानस्य लोपात् च गाण्डिवे शर-सन्धानमपि न कृतवानहम् । कृष्णस्य अदर्शनात् दिशः शून्यं पश्यामि । महर्षे ! कृपया ब्रूहि मे कल्याणम् ।

व्यासः- सव्यसाचिन् ! मा विषादेन । ते महारथाः वृष्णिवीरा ब्रह्मशापात् प्रागेव विदग्धाः जाताः । तथैव भवितव्यं दिष्टं तेषां महात्मनां देवांशसम्भूतानाम् । अन्यथाकर्त्तुं समर्थेनापि भगवता कृष्णेन उपेक्षित इव तद्विनाशः

अष्टवक्रस्य शापात् मानवीत्वं गतास्तेऽप्सरसः दस्युभिः अपहरणेन शापमुक्ताः संजाताः । अतः अशोच्या एव ताः । कृष्णस्तु प्राचीनऋषिः नारायण एव । पृथिव्याः भारावतरणं कृत्वा स्वस्थानं गतः । युष्माभिरपि देवकार्यं कृतमेतावता । समाप्तमिव युष्माकं कर्त्तव्यमिह । अधुना परलोकगमनमेव श्रेयष्करं वः ।

"कालमूलमिदं सर्वं जगद्बीजं धनञ्जय
काल एव समादत्ते पुनरेव यदृच्छया ।
स एव बलवान् भूत्वा पुनर्भवति दुर्बलः
स एवेशश्च भूत्वेव परैराज्ञायते पुनः ।
एवं बुद्धिश्च तेजश्च प्रतिपत्तिश्च भारत
भवन्ति भवकालेषु विपद्यन्ते विपर्यये
कृतकृत्यानि चास्त्राणि गतान्यद्य यथागतं
पुनरेष्यन्ति ते हस्ते यदा कालो भविष्यति" ।

अतः भवतामपि अन्तिमां गतिं गन्तुं कालोऽयमागतः । तदेव परमं श्रेयः व इति मे मतिः ।

अर्जुन - यातुमनुजानीहि भगवन् ! (प्रणम्य उदासीनः हस्तिनापुराय गतः शोकविह्वलः)

—*—

# चतुर्थांकः

## प्रथमदृश्यम्

(पथितरसा सर्पन्तं कीटं पश्यन् व्यासदेवः पृच्छति)

व्यास – कीट । क्व धावसि त्वरितं भयेन ? कस्मात् ते भयमागतम् ? अकपटं ब्रूहि ममाग्रतः । सकलप्राणीनां भाषासु अभिज्ञोऽहम् ।

कीटः- महामते ! शकटस्य घोषं श्रुत्वा भयं जायते चेतसि मे । मद्विधेन कीटेन तद्दारुणशब्दः श्रोतुं न शक्यः । तस्मात् अतिक्रान्तोऽस्मि पन्थानम् । प्रभो ! जीवितं सुदुर्लभं भूतानां । मृत्युरेव दुःखम् । अतः पलायमानोऽहं असुखं शङ्कमानः ।

व्यासः- कीट ! तिर्यग्योनौ कुतः सुखं वा स्यात् ? मरणमेव ते श्रेयः ।

कीटः- महाप्राज्ञ ! सर्वयोनिषु जीवानां सुखमस्ति । इहापि मे सुखानुभवः । तस्मात् जीवितुमिच्छामि । पूर्वजन्मनि बहुधनः शूद्रोऽहमासम् परन्तु अतीव लोभी निर्दयश्च । पुराकृतपापकर्मस्मरणेन मयि भीतिर्भवत्यधुनापि । सर्वं अधर्मं कृत्वापि तत्र मातरं वृद्धां सेवितवान् तथा

अतिथिरूपेण आगतं ब्राह्मणं सकृत् पूजितवान्। तत् पुण्यकर्मणः प्रभावात् कीटयोनावपि जन्मान्तरस्मृतिः किञ्चित् वर्त्तते मयि इदानीम्। अतः पुनः सुखाय मे आशा। कृपया ब्रूहि भगवन्। केन मे श्रेयः स्यात् ?

व्यासः- मद्दर्शनादेव अमोहस्ते कीटजन्मन्यपि। अहं त्वां दर्शनादेव तारयामि तपोबलात्। इह धर्मे ते मतिः भवति चेत् अवश्यं तमवाप्स्यसि। परन्तु नचात्र कीटजन्मनि। तदनन्तरमेव। क्रमशः तिर्यक्शूद्रवैश्यक्षत्रियजन्मप्राप्य अन्ते ब्राह्मणशरीरं धारयिष्यसि। तदानीं अहमागत्य ब्रह्मविद्यां कथयिष्यामि ते येन अभीष्टलोकं यास्यसि सुखेन। सम्प्रति शरीरमिदं त्यक्तव्यम्।

कीटः- एवमस्तु। (वर्त्मनि पतितः कीटः शकटचापेन पञ्चत्वं गतः।)



## द्वितीयदृश्यम्

(व्यासाश्रमे प्रविशति कश्चित् राजपुरुषः)

राजपुरुषः- तपोधन ! ते नमोऽस्तु। भवत्प्रसादात् अहं स एव पूर्वतनकीटोऽपि इदानीं राजपुत्रत्वमासाद्य अदिवलेन कुञ्जरेण नीयमानोऽस्मि। महत्सुखेन वसामि प्रासाद-कक्षेसु। एतत् सर्वज्ञस्य ते सर्वभूतहितेरतस्य महात्मनः

करुणायाः फलं एव । का सेवा करणीया ते मया प्रशाधि माम् ।

व्यासः- राजन् ! तव वाग्भिरेवाद्य पूजितोऽहम् । किं पुनः सेवया । परन्तु अद्यापि त्वयि कीट जन्मनः स्मृतिः वर्त्तते एव ; पूर्वपूर्वपापानां पूर्णतया क्षयो न जातः । तिर्यग्-योनावपि मद्दर्शनाप्तिः ते सौभाग्यमेव येन राजा भूत्वा मत् सपर्या करोषि । एतत् पूजाफलेन इहापि त्वं गोब्राह्मणानां हिताय आत्माहुतिं करिष्यसि संग्रामे बहुसुखभोगानन्तरम् । भूयः पवित्रब्राह्मणरूपमाप्नुय पर्याप्तदक्षिणायुक्तक्रतून् हुत्वा स्वर्गवासानन्तरं अविनाशिब्रह्मपदं लप्स्यसे । इदानीं याहि स्वधर्मं प्रजापालनं कुरु तपश्च समाचर ।

राजपुरुषः- प्रभो अहेतुकी ते करुणा । अन्यथा कीटेऽपि कथमेतादृशी सहानुभूतिः स्यात् ? नमोऽस्तु तुभ्यम् ।

(प्रणम्य याति)

—※—

## तृतीयदृश्यम्

(ग्रामालये वसति कश्चित् विप्रः । तत्र व्यासस्यागमनम्)

व्यासः– (स्वं) अहो ! स एव कीटः इदानीं ब्राह्मणदेहं संप्राप्तः । (समीपंगत्वा) ब्राह्मणशिरोमणे ! अहं व्यासदेवः त्वामनु-

जिघृक्षुः अत्रागतः । अपि सुखेन वर्त्तसे शुभकर्मणामनुष्ठानात् ? इदानीं मा व्यथिष्ठाः । शुभकृत शुभयोनिषु पापकृत् पापयोनिषु एव यथापापफलभोगं उपपद्यते । अस्मिन् ब्राह्मणशरीरे त्वं मृत्योः कथञ्चन मा व्यथिष्ठाः । परन्तु धर्मलोपभयं ते स्यादेव सर्वथा निर्भयोऽपि । तस्मात् उत्तमधर्मं समाचरतु भवान् ।

ब्राह्मणः- भगवन् ! जानामि त्वां मत्सुखमूलम् । त्वत्कृपयैव अहं सुखतरं योनिमाप्तवान् क्रमशः । इदानीं धर्ममूलां श्रियं प्राप्य पापानि नष्टानहम् । प्रणामाः सन्तु ते भूयसा ।

व्यासः- प्रसन्नोऽसि ते कृतज्ञतायाः विनयात् च । त्वं सद्धनेन अत्र यज्ञान् हुत्वा अन्ते च ब्रह्मविद् भूत्वा ब्रह्मणः सालोक्यं आप्नुहि । ब्राह्मण ! पश्य धर्मचर्यायाः फलम् । धर्मेण एव अर्थकामौ सुलभौ लोकानाम् अत्र त्वमेव प्रमाणम् । परन्तु

"ऊर्ध्वबाहुर्विरौम्येष न च कश्चित् शृणोतिमां
धर्मादर्थश्चकामश्च स किमर्थं न सेव्यते"

(गायन् गच्छति परमकारुणिकः वेदव्यासः)

—*—

## चतुर्थदृश्यम्

(हिमाद्रिगुहायां दर्भासनेतपस्यारतः व्यासःध्यानादुत्थाय)

व्यासः- (स्वं) कलौ वेदे रुचिः ज्ञानं वा भवेत कतमानाम् विस्तृते ऽवपि वेदेषु । न तादृक् तेन लाभः स्यात् प्रजानां धर्मकर्म-जिज्ञासूनाम् । तदर्थं श्रूत्यर्थप्रतिपादकं महाभारतं मनसा चिन्तितं मे । परन्तु कथं तत् शिष्यान् अध्यापयानि अलिखितं चेत् । (ब्रह्मणः आविर्भावः)

व्यासः- (आसनादिकं दत्वा पूजयति परिक्रामति च) ब्रह्मन् ! मया परमपूजितं काव्यं कृतं यत्र साङ्गोपनिषदां वेदानां रहस्यं विविधधर्माश्रमाणां लक्षणं चातुर्वर्ण्यविधानं पुण्य-तीर्थानां देशानां च कीर्त्तनादिकं सर्वं प्रदत्तं प्रजानां हिताय विशेषतः वेदेषु अनधिकारिणां स्त्रीशूद्रद्विजबन्धूनाम् । परन्तु एतस्य लेखकं न पश्यामि पृथिव्याम् ।

ब्रह्मा- पाराशर बादरायण ! महत्कल्याणं कृतं त्वया प्रजानां हिताय । तदेव ते अक्षया कीर्त्तिः भविष्यति जगत्यां यावत् चन्द्रदिवाकरम् । त्वामेव मुनिसंचयेषु श्रेष्ठतरं मन्ये रहस्यज्ञानवेदनात् । तव ब्रह्मवादिनी वाक् सदा सत्यमयी जन्मप्रभृत्येव । त्वया काव्यं कृतं इत्युक्तं ।

तस्मात् तत् काव्यमेव भविष्यति। चिराय अनतिक्रमणीयः एष भवेत् कविभिः। ते चास्य उपजीविनो भवेयुः। अलिखनात् प्रचारे सरे च बाधा स्यात्। तस्मात् काव्यस्य लेखनार्थं गणेशं स्मर्यताम्।

(इत्युक्त्वा ब्रह्मणः स्वधामगमनम्। व्यासस्य स्मरणात् गणेशस्य आत्मप्रकाशः)

व्यासः- (पूजान्ते)। कार्याय त्वां स्मृतवान् धातुः उपदेशेन। मम मनसा कल्पितस्य महाभारतकाव्यस्य लेखको भव लोकानां कल्याणाय।

गणेशः- (किञ्चिद् विचिन्त्य) लिखतो मे लेखनी क्षणं नावतिष्ठेत चेत् तदा लेखकः स्याम्।

व्यासः- परन्तु अबुद्ध्वा मा लिख क्वचित्।

गणेशः- तथास्तु।

व्यासः- वैशम्पायन! लेखनान्ते पुराणं त्वया ग्रहीतव्यं यत्नेन। जनमेजयस्य सर्पयज्ञावसरे समये प्रख्यापय। तत्र तवमुखादाकर्ण्य तत् पुराण काले व्याख्यापयिष्यति सौतिः नैमिषारण्ये मुनीनां पुरतः येनास्य सम्यक् प्रसारः भविष्यति लोकेषु।

वैशम्पायनः- यथाज्ञापयन्ति गुरवः। (व्यासगणेशयोः प्रस्थानम्)

"नमोऽस्तु ते व्यास विशालबुद्धे
फुल्लारविन्दायतपत्र नेत्र
येन त्वया भारत तैलपूर्णः
प्रज्वालितो ज्ञानमयः प्रदीपः। "

नेपथ्ये- पाराशर्यवचः सरोजममलं गीतार्थगन्धोत्कटं
नानाख्यानक केसरं हरिकथासम्बोधनाबोधितम्
लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा
भूयात् भारतपङ्कजं कलिमलप्रध्वंसि नः श्रेयसे।

—*—

## पञ्चमदृश्यम्

(वाराणस्यां गङ्गातटे वेदनिधिनामा ब्राह्मणः उपविष्टः कमप्यपेक्षमाणः)

वेदनिधिः- मध्याह्न आगतमिव। कुत्र वेदव्यासस्य आगमनं गङ्गास्नानाय नित्यविश्वनाथदर्शनाय बदरीवनं विहाय हिमाद्रिचूडासु। मिथ्या मिथ्या एव जनश्रुतिः। जनश्रुतिः यथार्थतः किं वदन्ती इव। स्थविरपुरुषस्य कथं सर्वत्रा-गमनक्षमता। अमरत्वं चिरजीविनां नाम्ना एव न तु स्वदेहतः।

(दण्डधारी कश्चित् भिक्षुकस्य आगमनं स्नानं च)

भिक्षुकः- गन्तुमारभते स्नानान्ते गीतं गायन्—

"गङ्गातरङ्ग कमनीयजटाकलापं
गौरीनिरन्तरविभूषितवामभागं
नारायणप्रियमनङ्गमदापहारं
वाराणसीपुरपतिं भज विश्वनाथम् ।

वेदनिधिः- न कोऽपि सन्यासी आगतोऽत्र एतावता । अयमेक एव दण्डी अत्र दृष्टः । भवतु न वा तच्चरणौ गृह्णामि । व्यासकृतविश्वनाथाष्टकमपि गायत्ययम् । व्यासो भवेद्वा को वा जाने चरितं गूढलिङ्गिनां महापुरुषाणां छलप्रियाणां (पदं गृह्णाति)

भिक्षुकः- मा स्पृश मा स्पृश मां । अरे अधम ! दूरे स्थातव्यं ते ।

वेदनिधिः- महात्मन् ! नहि हातुमुत्सहे ते पदद्वयम् । त्वमेव साक्षात् वेदव्यास इति मे मतिः । त्वं छद्मना प्रत्यहं गङ्गास्नानाय विश्वनाथदर्शनाय आगतोऽत्र इति किम्बदन्त्यां विश्वस्तः त्वामपेक्षमाणः प्रभातकालात् अत्रास्थितोऽहम् । भगवन् ! मयि भाग्यहीने प्रसीदतु भवान् वेदव्यासश्चेत् ।

(भिक्षुकः- सरलविश्वासात् प्रसन्नः आत्मानं प्रकाशयति ।)

वेदनिधिः- (दृष्ट्वा विस्मितः) अहो वपुं कमेघोपमं शरीरम्

श्रीव्यासदेवस्य पिङ्गलजटाकलापं। रुद्राक्षमाला। दण्डक-मण्डलू करयोः।

भिक्षुक.- किं प्रयोजनं ते वेदव्यासेन ? ब्रूहि ममाग्रतः। अहमेव वेदव्यासः कृष्णद्वैपायनः।

वेदनिधिः- (प्रणम्य) दर्शनात् कृतार्थोऽस्मि। भगवन् ! अद्य मे पितुः श्राद्धदिवसं। भवन्तं निमन्त्रयामि भोजनाय मद्गृहे।

व्यासः- (विहस्य) भोजनस्य प्रबन्धं कुरु। पश्चाद् याम्यहं। श्राद्धमहमेव कारयिष्यामि। शालग्रामादिकं स्थापय यथास्थानम्। (वेदनिधिः गृहं गत्वा)

वेदनिधिः- भामिनि ! अद्य विषादस्य नो विरतिः स्याद् चिराय।

पत्नी- कथम् ? द्रुवशप्तयोः धनसन्तानहीनयोरावयोः कथं वा सौख्यं स्यात् चिराय ? पानेन मत्तोऽसि किमु ?

वेदनिधिः- प्रिये ! नहि मे मत्तता संजाता सिद्धिपानात्। भगवान् वेदव्यासः छद्मना गङ्गास्नानाय अत्रागतवान् मध्याह्ने। तमेव महात्मानं दयालुं शरणं गत्वा अस्मद् गृहाय आगन्तुं अनुरुद्धवान् श्राद्धभोजनाय। स तु श्राद्धं कारयिष्यति कृपया। प्रसन्ने भगवति वेदव्यासे कथं दुःखं वा स्यात् आवयोः।

पत्नी- अहो पुराणकारव्यासस्य आगमनं अस्मद् गृहाय । नूनँ महत् सौभाग्यं नः । (आनन्देन पायसादिकं करोति । पीठेषु शालग्रामशिलास्थापनम् । इत्यन्तरे व्यासस्य आगमनम् । भूमौ प्रणामः । पदक्षालनम् तज्जलेन सिञ्चनं सर्वत्र ।

व्यासः- वेदनिधे ! त्वरितं आसनं याहि । श्राद्धसंकल्पं कुरु ।

"ॐ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजं
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।
स्मृते सकलकल्याणभाजनं यत्र जायते
पुरुषः तमजं नित्यं व्रजामि शरणं हरिम्"

श्राद्धान्ते भोजनं कृत्वा ।

व्यासः- वेदनिधे प्रसन्नोऽस्मि ते भक्तिविश्वासात् । पुत्रदशकं ते भविष्यति । सप्तपुरुषं यावत् धनसंपत् स्थास्यति ते निश्चला । मत् प्रसादात् अन्ते वैकुण्ठप्राप्तिर्भवतु ते । मद्दर्शनकामश्चेत् त्वं वर्षे वर्षे आषाढिपूर्णिमायां मत् पूजां कुरु (अन्तर्द्धानं)

वेदनिधिः- दयिते ! भगवतः व्यासस्य प्रसादात् सर्वमङ्गलं भविष्यति एव नः । अद्य प्रभृति अस्मद्गृहे व्यासदेवस्य प्रीतये महाभारतपाठः प्रचलतु । तदेव व्यासचर्या नः ।

उक्तं च- "वेदे रामायणे चैव पुराणे भारते तथा
आदौचान्ते च मध्ये च हरिः सर्वत्र गीयते ।
भारतं परमं पुण्य भारते विविधाः कथाः
भारतं सेव्यते देवैः भारतं परम पदम्
भारतं सर्वशास्त्राणामुत्तमं कथयन्ति च
भारतात् प्राप्यते मोक्षः तत्वमेतद् ब्रवीमि तत् ।"

—*—

षष्ठदृश्यम्

(सुमन्तु पैलानां व्यासगुहायामागमनं पुनः । सर्वे प्रणमन्ति)

व्यासः- अपि कुशलं वः सर्वेषाम् ? अपि सुष्ठु कृतः वेदानां प्रचारः युष्माभिः लोकेषु ? आगमनेन प्रीतोऽहं किमभिप्रायम् ?

पैलः- प्रभो ! धर्मसंशयो जातो नः इदानीम् । तन्निराकरणाय अत्रागमः । वेदाः त्रैगुण्यविषयाः । वैदिकक्रियायाः फलं स्वर्गभोगः सतु पतनशीलः । निवृत्त्या एव मोक्षः । तस्मात् कथं वयं अनात्मलाभपदव्यां प्रचालिताः ? प्रवृत्तिलक्षणो निवृत्तिलक्षणो वा धर्मः कतमः श्रेयस्करो नः ?

व्यासः- पुत्रकाः ! मदाज्ञया एव युष्माकम् वैदिकक्रियानुष्ठानम् लोकेषु वेदानां सम्यक्प्रचाराय । गुरोराज्ञापालनं धर्म्यमेव तस्मात् तत्र वः न बन्धनं फलासंयोगात् । वस्तुतस्तु

उभयविधधर्मः भगवता नारायणेन स्थापितः अधिकारिणां सौकर्याय। प्रवृत्तिलक्षणधर्माचरणेन प्राणपोषणं शान्तिवर्द्धनं च भवेत्। निवृत्त्या सर्वथा उपरमः स्यात्। सर्वत्र हरिरेव ध्येयः।

अतः—"क्रियतां मद्वचः शिष्याः सेव्यतां हरिरीश्वरः
गीयतां वेदशब्दैश्च पूज्यतां च यथाविधि"।

पैलः- गुरो "बह्वृचा"ख्या ऋक्संहिता मह्यमर्पिता भवता। तां द्विधां कृत्वा इन्द्रप्रमितिवास्कलाभ्यां दत्तवानहम्। तावपि पुनः भागं कृत्वा स्वशिष्यान् वोध्याग्निमित्रमाण्डुकेयादीन् ग्राहयामासतुः। एवं शिष्यपरम्पराक्रमेण वत्समुद्गलगालीयगोखल्यशिशिरशाकल्यजातुकर्ण्यफेनवैतालादयः ऋक्संहितायां प्रवीणाः जाताः।

वैशम्पायनः- मया गृहीता "निगदो" नाम यजुःसंहिताः घटनाक्रमेण इदानीं तैत्तिरीयशाखा इत्याख्यया प्रसिद्धिं गताः। मत् शिष्यः याज्ञवल्क्यस्तु भक्त्या सूर्यमुपस्थाय तस्मात् वाजिरूपधरात् यजुःमन्त्रान् गृहीत्वा तामेव वाजसनेयसंहितां स्वशिष्यान् कण्वमाध्यान्धिनादीन् ग्राहयामास।

जैमिनि- मत्शिष्यः सुकर्मा साम्नां सहस्रसंहिताभेदं कृत्वा हिरण्यनाभपौष्पञ्जिमाङ्गलिकुल्यकुसीदानन्त्यादीन् ग्राहयामास शिष्यपरम्पराक्रमेण।

सुमन्तुः- मत्शिष्यः कबन्धोऽपि अथर्ववेदं द्विधा कृत्वा पथ्य-वेददर्शकशौक्लायनिपिप्पलायनिबभ्रु शुनकादीन् शिष्य-प्रशिष्यक्रमेण ग्राहयामास ।

व्यासः- प्रसन्नोऽसि कृतिभिः वः । भगवति वासुदेवे दिवंगते कलिरागत एव । कलौ हीनसत्वानां स्वल्पमेधषां जनानां समग्रवेदमन्त्राणामवधारणं न सम्भाव्यते । विभाजनात् मन्त्रग्रहणेन ब्राह्मणानां शाखाभेदेष्वपि समग्रदेशे सर्व-मन्त्राणां रक्षणं स्यात् तैः । इत्येव मेऽभिप्राय आसीदा-पाततः वेदविभाजनात् । तदनुसारेण युस्माभिः साधु कृतम् । अतः मत्पूजायां शुकेन सह युस्माक चतुर्णां चिराय पूजा प्रचलिष्यति कलौ मत्प्रसादात् ।

शिष्याः- यथारुचिः आचार्याणाम् ।

व्यासः- यूयं स्व स्व कार्यं कुरुत । अय्यारुणिकश्यपसार्वण्यकृतव्रण-वैशम्पायनहारितरोमहर्षणास्तु पुराणाचार्याः भूत्वा लोक-साधारणेषु मत्शिक्षां प्रसारयन्तु । इतः परं अत्रैव स्थास्याम्यहं प्रच्छन्नं बद्रिगुहायां । प्रयोजने सति युस्मान् अपरापरभक्तांश्च आत्मानं दर्शयामि । इदानीं यामि गुहान्तरं स्वकार्य्याय । सर्वेषां कल्याणमस्तु वः । लोकाः सर्वत्र सुखितो भवन्तु मया सह पाठं कुरुत ।

"जन्माद्यस्ययतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सुरयः
तेजो वारिमृदां यथाविनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धिमहि ।"

(गायं गायं वदरीगुहान्तरं प्रविष्टोऽभूत् भगवान् वादरायण:)

शिष्याः- (भक्तिविस्मयदुःखेन मुहुर्जिग्युः)—

"व्यासायविष्णुरूपाय व्यासरूपायवेधसे
नमो वै ब्रह्मनिधये वाशिष्ठाय नमोनमः
अचतुर्वदनो ब्रह्मा द्विबाहुरपरोहरिः
अभाललोचनः शम्भुर्भगवान् वादरायणः ।"

—समाप्तम्—

# शुद्धिपत्रम्

| अशुद्धं | शुद्धं | पृष्ठा | पंक्तिः |
| --- | --- | --- | --- |
| उपरिरेवसोः | उपरिचरवसोः | ४ | ११ |
| अस्तव | अस्त्वेवं | ६ | ८ |
| सयो | सद्यो | ७ | २ |
| विमतः | विस्मितः | ८ | १८ |
| स्यति | सीदति | ८ | १९ |
| मुखमानाः | मुच्यमानाः | १० | ९ |
| वर्णन | वर्णान | ११ | १६ |
| ततसत्र | तत्सर्वं | १३ | ९ |
| प्रतक्ष्य | प्रत्यक्ष | १५ | १० |
| ममापन्न | ममाप्यन्न | १५ | २१ |
| यत्कृता | यत्कृतो | १५ | ६ |
| सवदा सवषु जीवषु | सर्वदा सर्वेषु जीवेषु | १७ | १५ |
| तूण | तूर्णं | २२ | ११ |
| अद्‌भता | अद्भुता | २२ | १६ |
| यावतः | यावः | २३ | २ |
| प्रीतायितुं | प्रीणयितुं | २५ | १३ |
| कर्माणि | कर्मणि | २५ | १९ |
| उददश्रमात् | भवदाश्रमात् | २६ | ११ |
| ब्रह्मपद | ब्रह्मापद | २७ | १ |
| दिगच्छा | दिगवथा | २८ | ४ |
| वेदनां | वेदानां | २९ | ४ |

# शुद्धिपत्रम्

| अशुद्धं | शुद्धं | पृष्ठा | पंक्तिः |
| --- | --- | --- | --- |
| मूर्त्तिमा | मूर्त्तिमान् | ३० | १० |
| मतः | मातः | ३१ | १४ |
| मुक्तन | मुक्तेन | ३३ | १२ |
| क्षस्य | मोक्षस्य | ३४ | १५ |
| प्रोजझ | प्रोज्झित | ३५ | १९ |
| काक्षितः | काम्क्षितः | ३७ | १८ |
| सदाथः | सदादेयः | ३८ | ५ |
| यजुवदस्यः | यजुर्वेदस्य | ३८ | १० |
| लाकालयं | लोकालयं | ३८ | १२ |
| मन्दा | मला | ३८ | १४ |
| वेदना | वेदानां | ३८ | १२ |
| नमनं | गमनं | ३९ | ३ |
| सुव | सुख | ३९ | १६ |
| रमणा | रमणी | ४० | ९ |
| शोभा | शोभां | ४० | ९ |
| क्राडतः | क्रीडत: | ४० | १७ |
| मर्द्दिता | मर्द्दितो | ४१ | १० |
| ताक्ष्य | तार्क्ष | ४१ | १४ |
| येनव | येनैव | ४१ | १६ |
| मकृष्य | माकृष्य | ४२ | ६ |
| स्यन | स्वेन | ४३ | ६ |
| नेषुः | नेदुः | ४३ | १ |

# शुद्धिपत्रम्

| अशुद्धं | शुद्धं | पृष्ठा | पंक्तिः |
|---|---|---|---|
| मुत्कता | मुक्तता | ४३ | १८ |
| ब्रह्मष | ब्रह्मर्षे | ४३ | १९ |
| उपदिष्टः | उपविष्टः | ४९ | ६ |
| महष | महर्षे | ४९ | १५ |
| कथदिष्यसि | कथयिष्यति | ४९ | १७ |
| दिवा रात्रौ | दिवा वा रात्रौ | ४९ | १८ |
| मप | मपि | ५० | १० |
| निरन्स्व | निरन् | ५३ | ४ |
| पूव | पूर्वं | ५४ | १० |
| अत्रविदः | अस्त्रविदः | ५४ | १० |
| आचाभ्रंशात् | आचारभ्रंशात् | ५६ | १६ |
| वान्वित्तम् | वनित्थम् | ५६ | १६ |
| निष्यामि | हनिष्यामि | ५७ | ८ |
| घटिमघुना | घटित मधुना | ५७ | १२ |
| प्रसावाव | प्रसादात् | ५९ | १ |
| हितायाते | हिताय ते | ५९ | १६ |
| विलष्टाः | विनष्टः | ६० | १० |
| जनायतुं | जनयितुं | ६० | १० |
| ससारे | संसारे | ६१ | ९ |
| ब्रह्मघाता | ब्रह्मघाती | ६२ | ५ |
| [illegible] | [illegible] | ६३ | [illegible] |
| रष्यन्ति | रेष्यन्ति | ६३ | १८ |